# SRI KANAKASABAPATHIYA BODHAYANA POORVA PRAYOGA

श्री कनकसभापतिया बोधायन पूर्वप्रयोगा

*Edited by :*

**Sri S. SUBRAMANYA SASTRY,**

**(Andivathiyar, Tirunelveli)**

*Corrected by :*

**Vizhacheri NATARAJA GANAPATI**

**AND**

**Pakshitheertham SUBRAMANIA DIKSHITHAR**

**(Mambalam)**

**Pandit Kizhathoor SRINIVASA IYENGAR, (T. Nagar).**

## PRAYOGA KARIGA AND SWARA

**Ist Edition**

*Published by.*

**SOUTH INDIAN ARCHAKAR ASSOCIATION**

**11, Thambu Chetty Street, Madras-1.**

**Price Rs. 20/-**

# भूमिका

भो आस्तिकवराः सहृदयाः सावधानेन मनसा सर्वैरपि विज्ञेयमेवैतत्, यत् सर्वान्तर्यामि परमात्मा वेदैरेव समधिगन्तुं शक्यत इति। तदवबोधेषु सर्वेषां चित्तशुद्धिर्नियता। तदर्थं कर्मभिः देवतानामुपासनं श्रुत्यादिषु विहितम्। आराध्याश्च देवता अनेकरूपा वर्तन्ते। तासु च अग्निं अपः भूसुरं च सर्वदेवतास्वरूपान् सङ्गिरन्ते श्रुतयः। ताश्च श्रुतयः "अग्निः सर्वा देवताः" "आपो वै सर्वा देवताः" "ब्राह्मणो वै सर्वा देवताः" इति। या या देवताः उपास्याः ताः विधिवत् यद्युपास्येरन् तदास्माकं भाग्यसम्पदः अनूना सञ्जायेरन्। यथाविधि देवतानामाराधनमेव "कर्म" इत्यभिधीयते। तथाकृतानि कर्मण्येव अदृष्टद्वारा फलजनकानि सन्ति। तथा कालदेशभेदेन क्रियमाणमपि कर्म विविधं फलं साधयति। यथा "वसन्ते वसन्ते ज्योतिषा यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" "सर्वर्तवो विग्राह्य शैशिरौ मासौ परिहाप्य उत्तमं च नैदाघम्" "कारीर्या वृष्टिकामो यजेत" इत्यादि। तथा कर्माङ्गानि तत्कर्तॄन् नियमांश्च जातकर्म नामकरणादिकर्मभिः स्नानादिशुद्धिकर्मभिश्च महर्षयः प्रतिपादयन्ति। तद्बोधकान्येव गृह्यसूत्राणीति कथ्यन्ते॥ कृष्टेषु क्षेत्रेषु तत्तत्काले क्रियमाणं बीजावाप नीरसेचनादिकं यथा व्रीह्युत्पत्तये (अन्नादि फलाय) कल्पते तथैव जनिष्यमाण शिशोः संस्कारार्थं गर्भाधानादिकं कर्मजातं विधीयते। तादृशकर्मविधायकमेव सूत्रं सूत्रमित्यभिधीयते। तन्नाम्ना ग्रन्थाश्च तत्तत्सूत्रानुसारेण महर्षयो रचयामासुः। धर्माचरणे तत्तत्सूत्रिणां क्वचित् क्वचित् प्रकारभेदाः यद्यपि वर्तेरन्। अथापि सर्वेष्वपि विभागेषु मुख्या अंशाः प्रायेण एकरूपा एव स्युः॥

गृह्यसूत्रकारेषु प्राचीन बोधायन इति प्रथितमेव। यतः "बोधायनमतं कृत्वा स्वसूत्र फलभाग्भवेत्" इति निगद्यते प्रतीयते च शिष्टैः॥

बोधायनगृह्यसूत्रानुसारिणो बहवः शिष्टा द्राविडेषु आन्ध्रेषु कर्णाटकेषु केरळेषु च देशेषु निवसन्ति। इतरेषु तत्रतत्र विरेळा वर्तन्ते॥

बोधायनसूत्रमनुरुध्य प्रयोगक्रमं भाष्य वृत्ति कारिकां च विरचितवन्तो विविधा विचक्षणाः। परन्तु तेभ्यो विषयाः इदानीन्तनाना न सुलभाव गाह्या इति कनकसभापतिनामा कश्चन भुवनसुधीमणिः तद्गृह्यसूत्रविषयान् सुखावबोधान् सुकरान् पक्षांश्च अस्मिन् ग्रन्थे प्रदर्शयति स्म। सोऽयं ग्रन्थः "बोधायन प्रयोगादर्श" इति सर्वप्रयोगाणा मादर्श इव विराजते। कनकसभापतिरयं द्रविडदेशे विल्लुपुरं इति प्रथितनगरप्रान्ते कञ्चिद्ग्राम विभूषितवान् इति वृत्तान्तः श्रुतिपथ मारोहति। अयमेव बोधायनसूत्रानुसारेण "मन्त्रानुक्रमणी" "कारिकामञ्जरी" इति ग्रन्थरत्नद्वयं इदानीं नोपलभ्यते। अयमपिग्रन्थः दुर्लभ इवासीत्। महताश्रमेण तमिमं संपाद्य मुद्राप्य च प्रकाशयितुं इयानुद्यमः। एतन्मुद्रणं आस्तिकानां प्रयोगकाले सुकरतां प्रीतिं च परमिकामातनोति॥

ग्रन्थेस्मिन्नादौ स्नानवपनादीन् शुद्धिकरान् प्रयोगानुपवर्ण्य ततो विवाहादि संस्कारान् सम्यक् निरूपयामास। ग्रन्थोऽयं तञ्जावुर सरस्वतीमहाल कोशागारे, अडयार पुस्तकालये, मद्रास सर्वकार प्राच्यकोशागारे च च विद्यमानेऽपि शुद्धः संपूर्णश्च न विद्यते इति महान्तं प्रयासमविगणय्य मुद्राप्य गृहस्थानां सौकर्याय प्रकाश्यते॥

वाचकदोषाश्चेत् क्षमाभूषणैः क्षन्तव्याः। ते निवेदिताश्चेत संशोध्येरन्।

गच्छतः स्खलनं वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

अनुगन्तुं सता वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नाऽवसीदति ॥

ब्राह्मणस्य शरीरं हि नोपभोगाय कल्पते ।
इह क्लेशाय महते प्रेत्यानन्तसुखाय च ॥

आदर्शपुस्तकानि—

1. सुब्रह्मण्यशास्त्रिः (ஆண்டி வாத்யார்) तिरुनेल्वलि
2. स्वामिनाथशिवाचार्याणा [अर्चक सङ्घ कार्यदर्शी]
3, अस्मदीयं प्राचीनम् [पक्षितीर्थाभिजन सोमयाजिवंशागतम्]
4. नारायणस्वामिशास्त्रिग. [अडयार पुस्तकालयपण्डित.]
5. ज्ञानमूर्तिदीक्षितस्य [चिदम्बर क्षेत्रम]
6. अन्ये च श्रौतसूत्र धर्मसूत्र गृह्यसूत्रग्रन्थाः स्मृतिप्रभृतयश्च ॥

इत्थं

नळ - चैत्रमासि — पक्षितीर्थाभियजन वेदमूर्ति यज्ञेश्वरदीक्षिततनूज,
माम्बलम् , मद्रास — सुब्रह्मण्यदीक्षितः सोमयाजीः

## ॥ विषयसूचिका: ॥

विषय:

42 उपनयना

43 सावित्रव्र

44 उपनयन

45 उपाकर्म

46 उपाकर्म

47 गायत्री

48 विद्यार

49 ब्रह्मचर्य

50 अवकी

51 होतृव्र

52 होतृव्र

53 शुक्रि

54 अवान

55 शुक्रि

56 अवान

57 गोदा

58 गोदा

59 उपनि

60 प्राज

61 सौम्य

62 आग्न

63 वैश्व

64 सम

65 तृष्ण

# THE SOUTH INDIAN ARCHAKAR ASSOCIATION

---

## New Devanagiri Edition Agamas and Veda Books

1 Sri Kamika Agama Part I, Poorva Bhagam . Rs 40

Uttara Kamika Agamam (Part II) *(Under Print.)*

2. Bodhayana Poorva Prayoga .. Rs 20

3. Kumaratantram .. Rs. 10

4. Sakalagama Sarasangraha .. Rs. 5

5. Kowmara Samhida .. Re. 1

श्रीरस्तु

॥ श्रीमहागणपतये नमः ॥

कनक सभापति विरचितः

# बोधायन-पूर्वप्रयोगादर्शः

—*

प्रणम्य विघ्नेश्वरमम्बिकां च
बोधायन स्मार्त शुभप्रयोगम् ।
बालप्रबोधाय विचार्य सूत्रं
क्रियाक्रमं च स्फुटतः प्रवक्ष्ये ॥

कनकसभापतिर्नामाहं कारिकामञ्जरीमुक्त्वा, मन्त्रानुक्रमणी च उक्त्वा, अनन्तरं **प्रयोगादर्शं** प्रयोगक्रमेण वक्ष्ये । प्रथमं प्रयोगश्लोकाः प्रवक्ष्यन्ते—

स्नानं पवनकर्माथ मन्त्राचमनमुक्तवत् ।
मन्त्रप्रोक्षण पुण्याहमिति स्नानादि पञ्चकम् ॥

अग्निमुखं परिभाषामुक्ताग्निं ग्रहयज्ञिकम् ।
नान्दीमुखं प्रतिसरं तोयशान्ति तथाङ्कुरम् ॥

गर्भादिप्रायश्चित्तान्तं ऋतुसंवेशनक्रियाम् ।
गर्भाधानं पुंसुवनं सीमन्तोन्नयनं ततः ॥

विष्णुर्बली जातकर्म फलीकरणहोमकम् ।
जातकर्मविशेषं च तथा कन्याक्रियामथ ॥

औपासनादेकदेश ग्रहण नामकर्म च ।
उपनिष्क्रामणं भुक्तिक्रियां च कर्णवेधनम् ॥

आयुष्यनक्षत्रहोमौ च चौळमक्षरधारणम् ।
उपवीतविधि पश्चादुपनीति समित्क्रियाम् ॥

दण्डनीरमुपाकर्म तर्पणादिक्रियामथ ।
गायत्र्या समिदाधानं विद्यारम्भविधि ततः ॥

ब्रह्मचर्यव्रतचितं होतृव्रतविसर्जनम् ।
शुक्रीयमवान्तराख्य तयोरुत्सर्जनं क्रमात् ॥

गोदानं च तथोत्सर्गमुपनिषद्व्रतं ततः ।
तदुत्सर्गमुपाकर्मोत्सृजनं स्नानकर्म च ॥

तूष्णी स्नानमनुक्लप्तं शकुनादिक्रियास्तथा ।
यक्षिभ्या च बलि तत्र विवाहारम्भमेव च ॥

कन्याप्रेषणमर्घ्याख्यं कन्यादानविधि ततः ।
विवाहं च प्रयाणादि कूश्माण्डौपासनादिकम् ॥

ध्रुवारुन्धत्युपस्थानमथोपनयनव्रतम् ।
नियमं पक्वहोमं च व्रतोत्सर्गोपवेशनम् ॥

पञ्चमेऽहन्युक्तकर्म त्वाग्रयस्थालिपाककम् ।
शयनं शकल होम वैश्वदेवादि होमकम् ॥

ततो वैवाहिकश्राद्ध स्थालीपाकविधि तत. ।
तत. पिण्डत्रय यज्ञमाग्रायण मृतुक्रियाम् ॥

समित्समारोपणाख्यमात्मारोपणमन्यतः ।
अग्न्यनुगतमहुतमादशाहादतः परम् ॥

द्वादशाहादूर्ध्वचित्तं षण्मासादूर्ध्वचित्तकम् ।
आहुतिद्वयसम्पर्कमुपरागमुखाहृतम् ॥

विधुरौपासनं चैव विधुराद्यग्निसंभवम् ।
प्रायश्चित्तानि चान्यानि शुभकर्माणि तत्क्रियाम् ॥

## अथ स्नानविधिरुच्यते

नदीषु देवखातेषु तटाकेषु सरस्सु वा ।
पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु ॥

**अथ सङ्कल्पः—**

मया कृतानां पापानां इह पूर्वेषु जन्मसु ।
क्षयद्वारेष्टसिध्यर्थं स्नास्यामि परिशुद्धये ॥

**अथ नमस्कारः—**

अशेषदेवताकारा आपो दिव्याश्च पार्थिवाः ।
नमामि वोऽहं युष्मासु स्नास्यामि परिशुद्धये ॥

यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारः तस्मै तोयात्मने नमः ॥

**अथ अनुज्ञा —**

समस्तजगदाधार शंखचक्र गदाधर ।
देहि देव ममानुज्ञां युष्मत्तीर्थनिषेवणे ॥

अतिक्रूर महाकाय कल्पान्त दहनोपम ।
भैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ॥

अथ जलं त्रिरावृत्य तीरे निवेदयेत्—

यन्मया दूषितं तोयं शारीरमलसंचयैः ।
तस्य पापविशुध्यर्थं यक्ष्माय परितृप्यतु ॥

इति मन्त्रेण जलमभिमन्त्रयेत् । "आपो वा इदं" इत्यनुवाकेन ।

आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापः अमृतमापः सम्राडापः विराडापः स्वराडापः छन्दांस्यापः ज्योतीꣳष्यापः यजूꣳष्यापः सत्यमापः सर्वा देवता आपः भूर्भुवस्सुवराप ओम् ॥

गङ्गादिसप्तनद्यश्च समुद्राश्च ह्रदा नदाः ।
तटाकादीनि तीर्थानि स्नानकाले भवन्तु मे ॥

इति सर्वतीर्थानि स्मरन् स्नायात् ।

अथान्तर्जलगतो मन्त्रं जपेत् । ऋतं च सत्यं चेत्यृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते इत्याचार्येणोक्तम् ।

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरजायत ततस्समुद्रो अर्णवः ॥

अथ 'मलापकर्षणस्नानं करिष्ये' इति संकल्प्य, प्राणानायम्य, द्रुपद-गायत्रीमन्त्रस्य गौर्गिलपुत्रो राजर्षिः, अनुष्टुप् छन्दः, द्रुपदो देवता । अस्मत्पापक्षयार्थे विनियोगः ।

द्रुपदानाम गायत्री यजुर्वेदप्रतिष्ठिता ।
अन्तर्जले त्रिरावृत्य ब्रह्महत्यां व्यपोहति ॥
मन्त्रो द्रुपदगायत्री स्नानमन्त्रेषु चोत्तमः ।
अन्तर्जलगतो जप्त्वा त्रिः प्लुतः स्याद् द्विजोत्तमाः ।
एवं स्नात्वा द्विराचम्य देवर्षिपितृतर्पणम् ॥

सव्यासस्योपरिष्टात् ग्रीवा हृदयं पृष्ठञ्च संपरिगृह्य दक्षिणस्य हस्तस्याधस्तादुपवीतं देवानामिति न्यायेन हृदयस्याधस्तादूर्ध्वं नाभेः हस्ताभ्या तर्पयेदङ्गुलीमूलेन—

वसूंश्च तर्पयामि । रुद्राश्च तर्पयामि । आदित्याश्च तर्पयामि । साध्याश्च तर्पयामि । ब्रह्मादयो ये देवा तान् देवान् तर्पयामि । सर्वान् देवान् तर्पयामि । सर्वदेवगणास्तर्पयामि । सर्वदेवगणपत्नीस्तर्पयामि । सर्वदेवगणपुत्रास्तर्पयामि । सर्वदेवगणपौत्रास्तर्पयामि । सर्वाश्च देवगणपत्नी. तर्पयामि ।

अथोपरिष्टादसाभ्या अधस्ताद् ग्रीवा हृदयं च संपरिगृह्य, हृदयस्याधस्तादूर्ध्वं नाभेः अङ्गुष्ठाभ्या संपरिगृह्णाति । तन्निवीत मनुष्याणामिति ।

अङ्गुल्यग्रेण ऋषीणाम् । कृष्णद्वैपायनादयो ये ऋषय· तानृषीस्तर्पयामि । सर्वान् ऋषींस्तर्पयामि । सर्वऋषिगणास्तर्पयामि । सर्वाश्च ऋषिपत्नीस्तर्पयामि । सर्वऋषिगणपत्नीस्तर्पयामि । सर्वऋषिगणपुत्रान् तर्पयामि । सर्वऋषिगणपौत्रास्तर्पयामि । सर्वाश्च ऋषिगणपत्नीस्तर्पयामि । दक्षिणस्यासस्योपरिष्टात् ग्रीवा हृदयं पृष्ठं च संपरिगृह्य सव्यस्य हस्तस्याधस्तात् प्राचीनावीत पितृणामिति । नाभेरूर्ध्वं हृदस्याधस्तात् तर्पयेदङ्गुष्ठाग्रेण । वैशंपायनादयो ये पितरः तान् पितन् तर्पयामि । सर्वान् पितन् तर्पयामि । सर्वपितृगणास्तर्पयामि । सर्वपितृगणपत्नीस्तर्पयामि । सर्वपितृगणपुत्रास्तर्पयामि । सर्वपितृगणपौत्रांस्तर्पयामि । सर्वाश्च पितृगणपत्नीः तर्पयामि ।

अथोपवीत परिगृह्य, अञ्जलिना जलं त्रिरावृत्य तीरे त्रिस्त्रिर्निनयेत् । 'ऊर्जं वहन्तीरमृत घृतं पय. कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् । तृप्यत तृप्यत तृप्यत ।'

## पवनकर्म

अथ वासः परिधाय, व.सः पीडयित्वा, यथाविधि द्विराचम्य, गृहं गत्वा, पादौ प्रक्षाल्य, अप आचम्य, त्रिपुण्डमूर्ध्वपुण्ड्रं वा संधार्य, पवमानाचमन कुर्यात् । परिभाषायां वेदकर्माणि प्रयोक्ष्यन् आदित एव तीर्थे स्नात्वा, अहतवास. परिधाय, एकविंशत्या दर्भपुञ्जीलैरात्मानं पावयित्वा, 'यज्ञस्य कुर्वन् भवति । त पावयति । पवित्रं वै दर्भा. । पवित्रं विष्णुः । प्रतिष्ठायैकविंशत्या पवयति । इत्यादि त्रेधा विभक्तं' पवयति' इत्यादिन्यायेन सप्तभिः दर्भैः तूष्णीं पवन भवति ॥

कण्ठादूर्ध्वं कटेरूर्ध्वमधस्तूष्णीं कुशाग्रकैः ॥

## अथ मन्त्राचमनम्

अब्लिङ्गाभि· ऋग्भि· त्रिः परिमृजेत् । 'यज्ञस्य वेदा वेदाना च यज्ञ' इति । यज्ञस्य वेदाना च संयोग करोतीत्यादिना ॥

अब्लिङ्गाभि पिबेदृग्भि. त्रिभिर्व्याहृतिभिर्मृजेत् ।
अथवा विपरीतं तन्मन्त्राचमनमिष्यते ॥

## अथ मन्त्रप्रोक्षणम्

तीर्थं गत्वा, प्रयतोऽभिषिक्तः, प्रयतो वाऽनभिषिक्तः, प्रक्षालितपाणिपादः, अप आचम्य, सुरभिमत्या अब्लिङ्गाभिः वारुणीभिः हिरण्यवर्णाभिः पावमानीभिः व्याहृतीभिः अन्यैश्च पवित्रैरात्मानं प्रोक्ष्य, प्रयतो भवति ।

(अब्लिङ्गाः)

दधिक्राव्ण्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत्प्रण आयूꣳषि तारिषत् । आपो हिष्ठा मयो भुवस्तान ऊर्जे दधातन । महे रणाय चक्षसे । यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

(वारुण्यः)

उदुत्तमव्वँरुणपाशमस्मदवाधमव्विमध्यमꣳश्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम । अस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि । यत्किञ्चेदव्वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोऽपिममानस्तस्मादेनसो देवरीरिषः । कितवासो यद्रिरिपुर्नदीवि यद्वाघासत्यमुत यन्न विद्म । सर्वाताविष्य शिथिरेव देवाथाते स्याम वरुण प्रियासः । अवते हेडो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेतो राजन्नेनाꣳसिशिश्रथः कृतानि ।

तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश॰ समान आयुः प्रमोषीः ॥

(हिरण्यवर्णाः)

हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निय्या गर्भन्दधिरे विरूपास्ता न आपश्श॰स्योना भवन्तु । यासा॰ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्श॰स्योना भवन्तु । यासान्देवा दिवि कृण्वन्ति भक्षय्या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवी पयसोन्दन्ति शुक्रास्तान आपश्श॰स्योना भवन्तु । शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशत त्वचं मे । सर्वा॰ अग्नी॰रप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त ॥

(पावमान्यः)

पवमानस्सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता सपुनातु मा । पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्व आयवः । जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देवदीद्यत् । अग्ने

क्त्वा क्रतू रनु । यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । उभाभ्यान्देव सवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे । वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तस्सधमाद्येषु । वय स्याम पतयो रयीणाम् । वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयो भूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् । बृहद्भिस्सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्ने दक्षैः पुनाहि मा । येन देवा अपुनत । येनापो दिव्यङ्कशः । तेन दिव्येन ब्रह्मणा । इदं ब्रह्म पुनीमहे । यः पावमानीरध्येति । ऋषिभिस्संभृत रसम् । सर्व स पूतमश्नाति । स्वदित मातरिश्वना । पावमानीर्यो अध्येति । ऋषिभिस्सम्भृत रसम् । तस्मै सरस्वती दुहे । क्षीर सर्पिर्मधूदकम् । पावमानीस्स्वस्त्ययनीः । सुदुघा हि पयस्वतीः । ऋषिभिस्संभृतो रसः । ब्राह्मणेष्वमृतँहितम् । पावमानीर्दिशन्तु नः । इमल्लोकमथो अमुम् । कामान्थ्समर्धयन्तु नः । देवीर्देवैस्समाभृताः । पावमानीस्स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः । ऋषिभिस्सम्भृतो रसः । ब्राह्मणेष्वमृतँ हितम् । येन देवाः पवित्रेण ।

आत्मानं पुनते सदा । तेन सहस्रधारेण । पावमान्यः पुनन्तु मा । प्राजापत्यं पवित्रम् । शतोद्यामँ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रस्सुनीती सहमा पुनातु । सोमस्स्वस्त्या वरुणस्समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ॥

अथाप्युदाहरन्ति—

अपोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् ।
मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते ॥

"सर्वकर्मारम्भेषु, प्राक् सन्ध्योपासनकालाच्च एतैरेव पवित्रसमूहैरात्मानं प्रोक्ष्य, प्रयतो भवति" इति धर्मवचनात् ।

मन्त्रैः सुरभिमत्याद्यैः मन्त्रप्रोक्षणमिष्यते ।
पच्छोऽर्धर्चशऋक्तो वा प्रोक्षेन्मूर्ध्नि कुशाग्रकैः ॥

## अथ पुण्याहम्

वेदकर्माणि प्रयोक्ष्यन् आदौ पुण्याहं कुर्यात् । युग्मान् ब्राह्मणान् भोजयित्वा, शुचौ देशे गोमयेन गोचर्ममात्रम् उपलिप्य चतुरश्रम् । अत्र ब्राह्मणान् भोजयित्वा अरिक्तपाणयो युग्मास्तिष्ठन्ति । तेषां दक्षिणतः उदङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कर्माणि करोतीति न्यायेन शुभकर्मसु सर्वेषु प्राङ्मुख एव कुर्यात् ।

पूर्णकुम्भ सकूर्च समभ्यर्च्य, दर्भेषु आसीनो, दर्भान् धारयमाणः, पत्नी दक्षिणतो, ब्राह्मणैः अनुज्ञा कुर्यात् । 'भवद्भिः अनुज्ञातः पुण्याहं वाचयिष्ये' इति संकल्प्य, 'ओ वाच्यतामि'ति प्रतिवचनं ब्रूयुः । तेषा सपवित्रेषु पाणिषु जलं दद्यात् 'ओमाप' इति । 'शिवा आपः सन्त्विति' प्रतिगृह्णन्ति । 'ओ गन्धाः' इति गन्धान् ददाति । 'सुगन्धाः पान्त्वि'ति प्रतिगृह्णन्ति । ततः पुष्पाणि ददाति, 'ओ सुमनस' इति । 'सौमनस्यमस्त्वि'ति प्रतिगृह्णन्ति । ततः अक्षतान् ददाति, 'ओ अक्षतमि'ति । 'अक्षतं चारिष्ट चास्त्वि'ति प्रतिगृह्णन्ति ।

अत्र ब्राह्मणाः अभुक्तवन्तश्चेत्, 'आमन्वाहार्यमि'त्योदन ददाति । 'स्वन्वाहार्योऽस्त्वि'ति प्रतिगृह्णन्ति । ततः तेभ्यो दक्षिणा ददाति, 'ओ दक्षिणा' इति । 'स्वस्ति दक्षिणाः पान्तु । बहुदेयमस्त्वि'ति प्रतिगृह्य वदेयु. । ततो दक्षिणजानुं भूमो निपात्य, सव्यमुद्धृत्य दर्भैर्युक्तमुदकुम्भं धारयन्, 'इडा देवहूतिरि'ति जपित्वा ।

'इडा देवहूतिः मनुयज्ञनीः बृहस्पति रुक्था मदानि शॅसिपद्विश्वे देवा-स्सूक्तवाच. पृथिवीमातर्मा माहि॑सीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासॅशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

अथ वदेत्, 'ओ मनः समाधीयतामि'ति । ते, 'समाहितमनसः स्म''इति प्रतिब्रूयुः । अथ, 'प्रसीदन्तु भवन्त' इति वदेत् । 'ओ प्रसन्नाः स्म'इति प्रतिब्रूयुः । अथ, ''शांतिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, ऋद्धिरस्तु,

अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु, शिवं कर्मास्त्वि'ति वदेत् । तथैव प्रतिब्रूयुः । तत्तत्कर्म यद्दैवत्यं भवति तस्य नाम गृह्णाति, 'असौ प्रीयतामि'ति । 'प्रीयन्तां भगवानसौ' ।

अथ, 'पुण्याहं भवन्तो ब्रुवन्तु' इति वदेत् । 'पुण्याह' इत्यूचुः । एवं त्रिः । 'ओ स्वस्ति भवन्तो ब्रुवन्त्वि'ति वदेत् । 'ओ स्वस्ती'ति प्रब्रूतियुः । एवं त्रिः । 'ओ ऋद्धि भवन्तो ब्रुवन्त्वि'ति वदेत् । 'ऋध्यतामि'ति प्रतिब्रूयुः । एवं त्रि. । 'पुण्याहसमृद्धिरस्त्वि'ति वदेत् । 'अस्त्वि'ति प्रतिब्रूयुः । अथ व्याहृतिभिर्भूमौ जल विसृज्य, उपविश्य, सुरभिमत्याअब्लिङ्गाभिर्वारुणीभिर्हिरण्य-वर्णाभिः पावमानीभिः व्याहृतीभि· आत्मान पत्नी च सर्वत्र प्रोक्षणं कुर्यात् । एतेन पुण्यकर्मणा अहोरात्रनक्षत्रैः ऋग्यजुस्सामवेदैः ऋद्धिमान् भवति । नास्य कर्मोपहत भवति । गोब्राह्मणाशीर्भिः समर्धयति । य एव विद्वान् पुण्याहं कुरुते तस्य कर्म समृद्धं भवति । तस्मात् ब्राह्मणमुखेन कुर्यात् ।

## आघारविधिः

अथ सर्वकर्मणामाघारवतो दर्विहोमस्य पुरस्तात्तन्त्रं उपरिष्टात्तन्त्रं च सर्वसाधारणमुच्यते—

शुचौ देशे गोमयेन गोचर्ममात्रं चतुरश्रमुपलिप्त, प्राङ्मुखमुपविश्य दर्भेषु, ब्राह्मणैरनुज्ञातो विघ्नेश्वरं च संपूज्य, संकल्प्य, पत्न्यान्वारब्ध·, पुण्याहं कृत्वा, दर्भद्वययुक्तस्फ्येनोद्धृत्यावोक्ष्य, पञ्चप्रस्थसिकता उक्तप्रकारेण व्याहृतीभि-र्न्युप्य, अरत्निमात्र समचतुरश्रं स्थण्डिल कृत्वा, तस्य मध्ये प्रादेशमात्रं दर्भैरङ्गुष्ठेन महानास्न्या च त्रिः प्राचीनमुल्लिखेत् मध्ये, 'ब्रह्मजज्ञानमि'ति ।

ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः ॥

'नाके सुपर्णमि'ति दक्षिणतः—

नाके सुपर्णमुपयत्पतन्तँ हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्य-पक्षं वरुणस्य दूत यमस्य योनौ शकुनं भुरण्युम् ॥

'आप्यायस्वे'त्युत्तरतः—

आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥

अथ त्रिरुदीचीनमुल्लिखेत् । 'यो रुद्र' इति मध्ये—

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु ॥

अप उपस्पृश्य, 'इदं विष्णुरि'ति पश्चात्—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे ॥

'इन्द्रं विश्वा' इति पुरस्तात्—

इन्द्रं विश्वा अवीवृधन्थ्समुद्रव्यचसं गिरः । रथीतमँ रथीनां वाजानाँ सत्पति॰पतिम् ॥

अथ अद्भिरभ्युक्ष्य, दर्भान्निरस्य, अप उपस्पृश्य, अग्नेः आसनं परिकल्प्य, औपासनाग्निं वा, याज्ञियात् काष्ठात् अग्निं मथित्वा, श्रोत्रियागाराद्वा, न कपालो, न धूमो, न ज्वालो, न विस्फुट इति न्यायेन अङ्गाररूपिणमाहृत्य, पन्नया वाऽन्यया वा व्याहृतीभिः न्युप्य, अग्निपात्र अरिक्तं कृत्वा, अग्निं धमन्या प्रज्वाल्य, काष्ठत्रयेण तूष्णीमन्वाधाय, अग्निमुपतिष्ठते **'जुष्टो दमूना' इति** ।

जुष्टो दमूना अतिथिर्दुरोणे । इमन्नो यज्ञमुपयाहि विद्वान् ।
विश्वा अग्नेऽभियुजो विहत्य । शत्रूयतामाभरा भोजनानि ॥

ततो दर्भद्वयेन आत्मासनं कल्पयित्वा, तृणं निरस्य, अप उपस्पृश्य, (पूर्वेद्युरिध्मा बर्हिः सन्नह्यति ।) उपवसथस्य रूप कृत्वा । अथवा सद्यः कालपक्षे इध्मा बर्हिः सन्नह्यति । अथैनं प्रदक्षिणमग्निं परिसमूह्य, पर्युक्ष्य, परिस्तृणाति । उत्तराग्रैः षोडशभिर्दर्भैः, 'देवस्य त्वे'ति परिस्तृणाति ।

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥

दक्षिणतः प्रागग्रैः सप्तदशदर्भैः व्याहृतीभिः परिस्तृणाति । पश्चादुदीचीनाग्रैः अष्टादशभिः 'उद्वयं तमसस्परी'ति परिस्तृणाति ।

उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

उत्तरतः प्रागग्रैः सप्तदशभिः, 'अग्न आयाही'ति परिस्तृणाति ।

अग्न आयाहि पीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ।

दक्षिणानुत्तरान् उत्तरानधरान् क्षिप्त्वा । अथ पात्रासने पञ्चोत्तरत, दक्षिणतो ब्रह्मासन सप्तदश उत्तरत., प्रणोतासनं च ।

## अथ पात्रसादनम्

अथ दर्व्यान्नहोमपक्षो नानुष्ठेयः । उक्तं स्थल विना दर्शपूर्णमासवत् सर्वहोमः। तस्मादाज्यस्थाली स्रुव सादयित्वा, जुहू प्रणीता सादयित्वा, चरुस्थाली प्रोक्षणी सादयित्वा, इध्मप्रव्रश्चनानि मेक्षण च सादयित्वा, अन्यानि तत्तत्कर्मयोग्यानि द्वंद्वानि सादयित्वा, देवसंयुक्तानि, एकैकशः पितृसंयुक्तानि सकृदेव मनुष्य-संयुक्तानि सादयित्वा, दर्भै. प्रच्छाद्य, बर्हिषा पवित्रे कुरुते । प्रादेशमात्रे समेऽप्रच्छिन्नाग्रे अनखच्छिन्ने बालके अनन्तर्गर्भे । अथैने अद्भिरनुमार्ष्टि । तूष्णीं मध्ये ग्रन्थि कृत्वा, प्रोक्षणीपात्रमादाय, तिरः पवित्रमुदगग्रं निधाय, अप आनीय, प्रागगत त्रिरुत्तानाभ्या हस्ताभ्या अङ्गुष्ठेन महानाम्न्या चोत्पूयाद्भिरेव पात्राणि प्रोक्ष्य त्रिः, उत्तानानि पात्राणि कृत्वा, विस्रस्येध्म, त्रि. प्रोक्ष्य, दर्भेषु दक्षिणतो ब्राह्मणमुपविशति । त गन्धादिभिरभ्यर्च्य तमुपतिष्ठते 'ओ भूर्भुवस्सुवरोम् ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मण' इति आदिशो अभ्युन्नीय ।

यद्वा, कूर्चपक्षे सदर्भदशकैः कूर्चं कृत्वा, दर्भासनेषु पूर्ववदुपविश्य, अथ सपवित्रं प्रणीता संपूर्य, हस्ताभ्या प्राणैः सम कृत्वा, 'वरुणोऽसि धृतव्रतो वारुणमसि' उत्तरेणाग्निमासने उपविश्य, गन्धादिभिरभ्यर्च्य, दर्भैः प्रच्छाद्य । अत्र व्रीहिनिर्वापणपक्षे पात्रसादनकाले उलूखल मुसल शूर्प कृष्णा-जिनानि सादयेत् । अत्र व्रीहीन्निर्वपति । 'अमुष्मै वो जुष्टं निर्वपामी'ति । तूष्णीं वा । एवं त्रिः सकृत्तूष्णीम् । अथ एना तथा प्रोक्ष्य, 'अमुष्मै वो जुष्टं

प्रोक्ष्यामी'ति तानुलूखले निधाय, मुसलेन चाहत्य, त्रिष्फलीकृत्य, त्रिः प्रक्षाल्य, निदधाति। अथवा, तण्डुलान्निर्वपति पूर्ववत्। तथा प्रोक्षणं च। अथ स्थाल्यामपः पयोवाऽऽनीय, अधिश्रित्य, तिरः पवित्रं तण्डुलानावपति।

अथवा, 'पक्वमोदनमि'ति पक्षे चरुनिर्वापण सर्वाभिरद्भिः। तथा प्रोक्षणमधिश्रयणं च। अथ प्रणीताजल, वेण गृहीत्वा, द्विश्वरौ निनयति। अथ आज्यस्थाल्या पवित्रवत्यां आज्यं निरुप्य, तिरः पवित्र सर्वदा उदगग्रमेव। उदीचोङ्गारान्निरुह्य, वियन्तान् कृत्वा, परिस्तरणाद्बहि· तेष्वधिश्रित्य, अभिद्योतनेन दर्भद्वयेनाभिद्योत्य, द्वे दर्भाग्रे अङ्गुष्ठमात्रे प्रच्छिद्य, प्रक्षाल्य, प्रत्यस्य, पूर्ववद्दर्भद्वयेन पुनरभिद्योत्य (यद्वा उभयत्र एकैकेनाभिद्योतनम्।)

अथ दर्भद्वयेन चरुमाज्यं च त्रिः पर्यग्निकृत्वा, व र्मकुर्वनुदगुद्वास्य, प्रत्यूहाङ्गारान्। अथैनमुदीचीनाग्राभ्या पवित्राभ्या पुनराहार त्रिरुत्पूय, विस्रस्य पवित्रे, अद्भिः सस्पृश्य, अग्नावनुप्रहरति। अथ स्रुव जुहूं च मेक्षणं दक्षिणे हस्ते, वामे चतुरो दर्भांश्चादाय, तानि विपरीतमादाय, स्रुवमग्रे दर्भाग्रैस्त्रिरन्ततः, त्रिर्बाह्यतः, ऊर्ध्वं समृज्य, तथा मूलैर्मूलमधः संमृज्य, अद्भि· संस्पृश्य, पुनर्निष्टप्य, निदधाति। एव जुहूं मेक्षण च।

अथ दर्भानद्भिः संस्पृश्य, अग्नावनुप्रहरति। अपरेणाग्नि बर्हिस्सन्नहने प्रागग्र बर्हिमुष्टिमास्तीर्वा, तस्मिन्नाज्यस्थालीं निधाय, चरुमभिघार्य, उदगुद्वास्य प्रतिष्ठितमभिघार्य, बर्हिषि निधाय, आज्यात् दक्षिणे उत्तरे चरु आज्यं पुरस्तात् धर्मवचनं विवाहे वक्ष्यति।

अथ परिधीन् परिदधाति। स्थविष्ठो मध्यमः। द्राघीयान् दक्षिणतः अणिष्ठो ह्रसिष्ठ उत्तरतः। ऊर्ध्वे समिधावादधाति। अथैन प्रदक्षिणमग्नि परिपञ्चति 'अदितेनुमन्यस्वे'ति दक्षिणतः प्राचीनम्। 'अनुमतेनुमन्यस्वे'ति पश्चादुदीचीनम्। 'सरस्वतेनुमन्यस्वे'ति उत्तरतः प्राचीनम्।

देवसवितः प्रसुवेति समन्तं प्रदक्षिणम् । समन्तमेव वा तूष्णीम् । इन्द्राय नम इति प्राच्या, यमाय नम इति दक्षिणस्यां, वरुणाय नम इति प्रतीच्यां, सोमाय नम इति उत्तरस्या, अग्नये नम इति आग्नेय्या, निर्ऋतये नम इति नैर्ऋत्या, वायवे नम इति वायव्या, 'ईशानाय नम' इति ऐशान्यां, 'अग्नये नम' इत्यग्नौ, सर्वेभ्यो ब्राह्मणेभ्यो नम' इति सदसि ।

इध्ममभ्यज्य, परिधिसमिधं विशिनष्टि । 'ब्रह्मन्निध्ममाधास्ये' । 'आधत्स्वे'ति प्रतिवचनम् । स्वाहाकारेणाभ्याधाय, अनूयाजसमिधमिध्मसन्नहनं च प्रणीताया निधाय, आघारावाघारयति । 'प्रजापतये स्वाहे'ति मनसा उत्तरे परिधिसन्धौ मस्पृश्य, श्लक्ष्णया सन्ततम् । 'इन्द्राय स्वाहे'ति उपांशु दक्षिणपरिधिसन्धौ दक्षिणार्धपूर्वार्धे ॥

## अथ अग्निमुखं जुहोति—

आज्यहोमे सदा वामहस्तेन आज्यस्थाली स्पृशेत् । **'युक्तो वहे'त्यादि** द्वादशाहुतीः—

1. युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणम् । यथेदं त्वं भिषग्भेषजस्याधि(सि)कर्ता त्वया गा अश्वान्पुरुपान्सनेमि स्वाहा । जातवेदसेऽग्नय इदम् ।

2. चतस्रआशाः प्रचरन्त्वग्नय इमन्नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरँ सुवीरं ब्रह्मसमिद्भवत्याहुतीनाꣳ स्वाहा । ब्रह्मण इदम् ।

3. आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिद. । देवा नो यथा (वेदसा) सदमृद्धिधेऽसन्नप्रायुवो रक्षितारो दिवे दिवे स्वाहा । अप्रायुभ्यो रक्षितृभ्यो देवेभ्य इदम् ।

4. विरूपाख्य मा विबाधिष्ठा मा विबाध विबाधिथाः । निर्ऋत्यै त्वा पुत्रमाहुस्स नः कर्माणि साधय स्वाहा । निर्ऋतिपुत्राय विरूपा-क्षायेदम् ।

5. विरूपाक्षमह यजे निजङ्घँ शबळोदरम् । यो मायु परिबाधते श्रियै पुष्टयै च नित्यदा तस्मै स्वाहा । मा परिबाधमानाय निजङ्घाय शबळोदरायेदम् ।

6. या तिरश्ची निपद्यसेऽह विधरणी इति । ता त्वा घृतस्य धारयाग्नौ सꣳराधिनी यजे स्वाहा । तिर्यङ्निपद्यमानायै विधरण्यै संराधिन्या इदम् ।

7. सꣳराधिन्यै देव्यै स्वाहा । सँराधिन्यै देव्या इदम् ।

8. प्रसाधिन्यै देव्यै स्वाहा । प्रसाधिन्यै देव्या इदम् ।

9. भूस्स्वाहा । अग्नय इदम् ।

10. भुवस्स्वाहा । वायव इदम् ।

11. सुवस्स्वाहा । सूर्यायेदम् ।

12. ओंभूर्भुवस्सुवस्स्वाहा । प्रजापतय इदम् ।

**अथ चरुप्रायश्चित्तम्।** यस्यां दिश्युत्सिच्येत तस्यै देवतायै स्रुवाहुति जुहुयात् । यदि प्राक् अग्नये, यदि दक्षिणतो यमाय, यदि पश्चात् वरुणाय, यद्युत्तरतः सोमाय स्वाहे'ति ।

अथ चरु 'आप्यायस्व,' 'सन्त' इति द्वाभ्यामाप्याययति ।

आप्यायस्व समेतु ते विश्वतस्सोमवृष्णियम् । भवा वाजस्य सङ्गथे ।

सन्ते पयांसि समुयन्तु वाजास्संवृष्णियान्यभिमातिषाहः ।

आप्यायमानो अमृताय सोमदिविश्रवांस्युत्तमानि धिष्व ।

**अथ अव्रत्यप्रायश्चित्तम्**

चतुर्गृहीतेन 'त्वमग्ने व्रतपा असि' 'यद्वो वयम्' इति कुर्यात् ।

त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्व यज्ञेष्वीड्यस्स्वाहा ।

यद्वो वय प्रमिनाम व्रतानि विदुषान्देवा अविदुष्टरासः । अग्नि-ष्टद्विश्व मापृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति स्वाहा । अग्नये व्रतपतय इदम् ।

अथ स्रुवेण जुह्वामुपस्तीर्य, मेक्षणेन चरुमालोड्य, पूर्वार्धादवदाय, अपरार्धादवद्यति, अभिघारयति, प्रत्यनक्ति । अथ पञ्चावत्ती स्यात् । उपस्तीर्य,

मध्यात् पूर्वार्धापरार्धादवद्यति, अभिघारयति, प्रत्यनक्ति। अथ पुरस्तात् स्रुवाहुती-र्हुत्वा, यथादेवत पुरोऽनुवाक्यामनूच्य, याज्यया जुहोति। उपरिष्टात् स्रुवाहुतिं हुत्वा, यत्रैका आम्नाता स्यात् द्विरभ्यावर्तयेत्। यद्यनेकदैवत्यकर्मणि चरुं यथाभागं विभज्य, द्वितीयपक्षमारभ्य परार्धादवदाय पूर्वार्धादवद्यति। तथा पञ्चावत्तिनः मध्यादपरार्धात् पूर्वार्धादवद्यति। एवमेव सर्वत्र।

अथ स्विष्टकृतं उपस्तीर्य, उत्तरार्धात्सकृत् अवद्यति, द्विरभिघारयति, न प्रत्यनक्ति। तथा पञ्चावत्तिनः उत्तरार्धात् द्विरवद्यति। शेषं पूर्ववत्।

अथानेकदेवत्ये देवतासंख्यया स्विष्टकृत्सकृदवदानम्।

द्विः द्विः पञ्चावत्तिनः। एकदेवत्ये अनेकहवींषि भवन्ति। महेन्द्रवत् सर्वत्रावदानम्। अथान्तः परिधि सादयित्वा, समेक्षणेन यथोक्तमाज्याहुतीर्जुहोति। अनाम्नातेषु व्याहृतीभिः आज्याहुतीः।

पुरस्ताच्चोपरिष्टाच्च हविषा स्यात् स्रुवाहुतीः।

अथ स्विष्टवतीभ्यां सौविष्टकृतं 'हव्यवाहमि'ति जुहोति 'रुद्रो स्विष्ट-कृदि'ति न्यायेन।

हव्यवाहमभिमातिषाहम्। रक्षोहणं पृतनासु जिष्णुम्।

ज्योतिष्मन्तं दीद्यतं पुरन्धिम्। अग्निꣳ स्विष्टकृतमाहुवेमो स्विष्टमग्ने

अभि तत्पृणाहि। विश्वा देव पृतना अभिष्य। उरुन्नः पन्थां प्रदि-

शन्विभाहि। ज्योतिष्मद्धेह्यजरन्न आयुस्स्वाहा। अग्नये स्विष्टकृत

इदम्।

अप उपस्पृश्य, मेक्षण प्रहृत्य । अथ सस्रावेणाभिजुहोति स्रुक्स्रुवाभ्याम् । जुह्वामप आनीय, मंक्षाल्य, अन्त· परिधि निनयति । निर्णिज्य, स्रुवं निष्टप्य, अद्भि प्रयित्वा । वहि. परिधि निनयति । उदग्दिशति । अनूयाजसमिधमादधाति । इध्मसन्नहनानि अद्भि संस्पृश्य, अग्नावनुप्रहरति ।

**अथ जयादिं जुहोति**—'चित्त चे'ति त्रयोदश ।

1· चित्तञ्च स्वाहा । चित्तायेदम् । 2· चित्तिश्च स्वाहा । चित्त्या इदम् । 3· आकूतञ्च स्वाहा । आकूतायेदम् । 4· आकूतिश्च स्वाहा । आकूत्या इदम् । 5· विज्ञातञ्च स्वाहा । विज्ञातायेदम् । 6· विज्ञानञ्च स्वाहा । विज्ञानायेदम् । 7· मनश्च स्वाहा । मनस इदम् । 8 शक्वरीश्च स्वाहा । शक्वरीभ्य इदम् । 9· दर्शश्च स्वाहा । दर्शयेदम । 10· पूर्णमासश्च स्वाहा । पूर्णमासायेदम् । 11· बृहच्च स्वाहा । बृहत इदम् । 12· रथन्तरञ्च स्वाहा । रथन्तरायेदम् ।

प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशस्समनमन्त सर्वास्स उग्रस्सहि हव्यो बभूव स्वाहा । प्रजापतय इदम् ।

'अग्निर्भूताना'मिति सप्तदश—

1 अग्निर्भूतानामधिपति स्समाव त्वस्मि न्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्य-स्याम्पुरोधायामस्मिन्कर्मन्नस्या देवहूत्या स्वाहा । भूतानामधिपतयेऽग्नय इदम् ।

2. इन्द्रोज्येष्ठानामधिपतिस्समावतु + देवहूत्या स्वाहा । ज्येष्ठानामधिपतय इन्द्रायेदम् ।

3. यमः पृथिव्या अधिपतिस्समावतु + देवहूत्या स्वाहा । पृथिव्या अधिपतये यमायेदम् ।

4. वायुरन्तरिक्षस्याधिपतिस्समावतु + देवहूत्या स्वाहा । अन्तरिक्षस्याधिपतये वायव इदम् ।

5. सूर्यो दिवोऽधिपतिस्स माऽवतु + देवहूत्या स्वाहा । दिवोऽधिपतये सूर्यायेदम् ।

6. चन्दमा नक्षत्राणामधिपतिस्स माऽवतु + देवहूत्या स्वाहा । नक्षत्राणामधितये चन्द्रमस इदम् ।

7. बृहस्पतिर्ब्रह्मणोऽधिपतिस्स माऽवतु + देवहूत्या स्वाहा । ब्रह्मणोऽधिपतये बृहस्पतय इदम् ।

8. मित्रस्सत्यानामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। सत्यानामधिपतये मित्रायेदम्।

9. वरुणोऽपामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। अपामधिपतये वरुणायेदम्।

10. समुद्रस्स्रोत्यानामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। स्रोत्यानामधिपतये समुद्रायेदम्।

11. अन्नꣳ साम्राज्यानामधिपति तन्माऽवतु + देवहूत्या स्वाहा। साम्राज्यानामधिपतयेऽन्नायेदम्।

12. सोम ओषधीनामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। ओषधीनामधिपतये सोमायेदम्।

13. सविता प्रसवानामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। प्रसवानामधिपतये सवित्र इदम्।

14. रुद्रः पशूनामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। पशूनामधिपतये रुद्रायेदम्।

अप उपस्पृश्य।

15. त्वष्टा रूपाणामधिपतिस्स माऽवतु + देवहूत्या स्वाहा। रूपाणामधिपपतये त्वष्ट्र इदम्।

16. विष्णुः पर्वतानामधिपतिस्स माऽवतु + देवहूत्या स्वाहा । पर्वताना-
मधिपतये विष्णव इदम् ।

17 मरुतो गणानामधिपतयस्ते माऽवन्तु + देवहूत्या स्वाहा । गणाना-
मधिपतिभ्यो मरुद्भ्य इदम् ।

**ऋताषाड्डतधामेति द्वाविंशतिः—**

1. ऋताषाड्डतधामाऽग्निर्गन्धर्वस्स इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा ।
ऋताषाहे ऋतधाम्नेऽग्नये गन्धर्वायेदम् ।

2. तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्मक्षत्रं पान्तु
ताभ्यस्स्वाहा । ओषधीभ्योऽप्सरोभ्य ऊर्ग्भ्य इदम् ।

3. सँहितो विश्वसामा सूर्यो गन्धर्वस्स इदं ब्रह्मक्षत्रं पातु तस्मै
स्वाहा । सँहिताय विश्वसाम्ने सूर्याय गन्धर्वायेदम् ।

4. तस्य मरीचयोऽप्सरस आयुवो नाम ता इदं ब्रह्मक्षत्रं पान्तु
ताभ्यस्स्वाहा । मरीचिभ्योऽप्सरोभ्य आयुभ्य इदम् ।

5. सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्स इदं ब्रह्मक्षत्रं पातु तस्मै
स्वाहा । सुषुम्नाय सूर्यरश्मये चन्द्रमसे गन्धर्वायेदम् ।

6. तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम ता इदं ब्रह्मक्षत्रं पान्तु
ताभ्यस्स्वाहा । नक्षत्रेभ्योऽप्सरोभ्यो बेकुरिभ्य इदम् ।

7. भुज्युस्सुपर्णो यज्ञो गन्धर्वस्स इद ब्रह्मक्षत्रं पातु तस्मै स्वाहा ।
भुज्यवे सुपर्णाय यज्ञाय गन्धर्वायेदम् ॥

8. तस्य दक्षिणा अप्सरसस्स्तवा नाम ता इद ब्रह्मक्षत्रं पान्तु
ताभ्यस्स्वाहा । दक्षिणाभ्योऽप्सरोभ्यस्स्तवाभ्य इदम् ।

9. प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्स इद ब्रह्मक्षत्रं पातु तस्मै
स्वाहा । प्रजापतये विश्वकर्मणे मनसे गन्धर्वायेदम् ।

10. तस्यर्क्सामान्यप्सरसो वह्नयो नाम ता इदं ब्रह्मक्षत्रं पान्तु
ताभ्यस्स्वाहा । ऋक्सामेभ्योऽप्सरोभ्यो वह्निभ्य इदम् ॥

11. इषिरो विश्वव्यचा वातो गन्धर्वस्स इद ब्रह्मक्षत्रं पातु तस्मै
स्वाहा । इषिराय विश्वव्यचसे वाताय गन्धर्वायेदम् ।

12. तस्यापोप्सरसो मुदा नाम ता इद ब्रह्मक्षत्रं पान्तु ताभ्यस्स्वाहा ।
अद्भ्योऽप्सरोभ्यो मुदाभ्य इदम् ॥

13. भुवनस्य पते यस्य त उपरि गृहा इह च । सनो रास्वाज्यानिं

रायस्पोषꣳसुवीर्यꣳसंवꣳत्सरीणाꣳस्वस्तिꣳस्वाहा । भुवनस्य पतय इदम् ।

14. परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्स इद ब्रह्मक्षत्रं पातु तस्मै स्वाहा । परमेष्ठिने अधिपतये मृत्यवे गन्धर्वायेदम् ॥

15. तस्य विश्वमफ्सरसो भुवो नाम ता इद ब्रह्मक्षत्र पान्तु ताभ्यस्स्वाहा । विश्वम्मा अफ्सरोभ्यो भूभ्य इदम् ॥

16 सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्स इद ब्रह्मक्षत्र पातु तस्मै स्वाहा । सुक्षितये सुभूतये भद्रकृते सुवर्वते पर्जन्याय गन्धर्वायेदम् ॥

17. तस्य विद्युतोऽफ्सरसो रुचो नाम ता इद ब्रह्मक्षत्रं पान्तु ताभ्यस्स्वाहा । विद्यद्भ्योऽफ्सरोभ्यो रुग्भ्य इदम् ॥

18. दूरे हेतिरमृडयो मृत्युर्गन्धर्वस्स इदं ब्रह्मक्षत्र पातु तस्मै स्वाहा । दूरे हेतये अमृडयाय मृत्यवे गन्धर्वायेदम् ॥

19. तस्य प्रजा अफ्सरसो भीरुवो नाम ता इद ब्रह्मक्षत्रं पान्तु ताभ्यस्स्वाहा । प्रजाभ्योऽफ्सरोभ्यो भीरुभ्य इदम् ॥

20. चारुः कृपणकाशी कामो गन्धर्वस्स इद ब्रह्मक्षत्र पातु तस्मै स्वाहा । चारवे कृपणकाशिने कामाय गन्धर्वायेदम् ॥

21. तस्याधयोऽफ्सरसश्शोचयन्तीर्नाम ता इदं ब्रह्मक्षत्रं पान्तु ताभ्य-
स्वाहा । आधिभ्योऽफ्सरोभ्यश्शोचयन्तीभ्य इदम् ॥

22. सनो भुवनस्य पते यस्य त उपरिगृहा इह च । उरुब्रह्मणेस्मै क्षत्राय
महि शर्म यच्छ स्वाहा । भुवनस्य पत्यै ब्रह्मण इदम् ॥

'यद्देवा देवहेडना' नुवाक विंशतिः—

1. यद्देवा देवहेडनम् । देवासश्च कृमा वयम् । आदित्यास्तस्मान्मा
मुञ्चत । ऋतस्यर्तेन मामुत स्वाहा । देवेभ्य आदित्येभ्य इदम् ॥

2. देवा जीवनकाम्या यत् । वाचानृतमूदिमा । अग्निर्मातस्मादेनसः ।
गार्हपत्यः प्रमुञ्चतु । दुरिता यानि च कृम । करोतु मामनेन स॰
स्वाहा । अग्नये गार्हपत्यायेदम् ॥

3. ऋतेन द्यावापृथिवी । ऋतेन त्व॰सरस्वति । ऋतान्मामुञ्चता॰
हसः । यदन्यकृतमारिम स्वाहा । द्यावापृथिवीभ्या सरस्वत्या इदम् ॥

4. सजातश॰सादुत वा जामि श॰स्यात् । ज्यायसश्श॰सादुत वा
कनीयसः । अनाज्ञातं देवकृत यदेनः । तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि
स्वाहा । अग्नये जातवेदस इदम् ॥

5. यद्वाचा यन्मनसा । बाहुभ्या मूरुभ्या मष्ठीवद्भयाम् । शिश्नैर्यदनृतञ्च कृमा वयम् । अग्निर्मा तस्मादेनसः + अनेन सᳲस्वाहा । अग्नये गार्हपत्यायेदम् ॥

6 यद्धस्ताभ्याञ्चकर किल्बिषाणि । अरक्षाणा वग्नुमुपजिघ्नमानः । दूरे पश्या च राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि स्वाहा । दूरे पश्याराष्ट्रभृद्भयामप्सरोभ्य इदम् ।

7. अदीव्यन्नृण यदहञ्चकार । यद्वाऽदास्यन्थसञ्जगाराजनेभ्य. । अग्निर्मा तस्मादेनसः + अनेन सᳲस्वाहा । अग्नये गार्हपत्यायेदम् ॥

8. यन्मयि माता गर्भे सति । एनश्चकार यत्पिता । अग्निर्मा तस्मादेनसः + अनेन सᳲस्वाहा । अग्नये गार्हपत्यायेदम् ॥

9. यदा पिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् । अहिᳲसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि स्वाहा । अग्नय इदम् ॥

10. यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिᳲसिम । अग्निर्मा तस्मादेनसः + अनेन सᳲस्वाहा । अग्नये गार्हपत्यायेदम् ॥

11. यदाशसा निशसा यत्पराशसा । यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मातस्मादेनसः+अनेन स~स्वाहा । अग्नये गार्हपत्यायेदम् ॥

12. अति क्रामामि दुरितं यदेनः । जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतान्नु ऊोक~स्वाहा । अग्नय इदम् ॥

13. त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किञ्चिदानशे । अग्निर्मा तस्मादेनसः+अनेन स~स्वाहा । अग्नये गार्हपत्यायेदम् ॥

14. दिवि जाता अप्सु जाताः । या जाता ओषधीभ्यः । अथो या अग्निजा आपः । तानश्शुन्धन्तु शुन्धनीस्स्वाहा । अद्भ्यश्शुन्धनीभ्य इदम् ॥

15. यदापो नक्तन्दुरितञ्चराम । यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीतनस्स्वाहा । अद्भ्यो हिरण्यवर्णाभ्य इदम् ॥

16. इमं मे वरुण श्रुधीहवमद्याच मृडय । त्वामवस्युराचके स्वाहा । वरुणायेदम् ॥

17. तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।

अहेडमानो वरुणेह बोध्युरुशꣳसमान आयुः प्रमोषीस्स्वाहा । वरुणा-
येदम् ॥

18. त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो
वह्नितमश्शोशुचानो विश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मथ्स्वाहा । अग्नीवरुणाभ्या-
मिदम् ॥

19. स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवय
क्ष्वनो वरुणꣳरराणोवीहिमृडीकꣳसुहवो न एधि स्वाहा । अग्नीवरुणा-
भ्यामिदम् ॥

20. त्वमग्ने अयास्ययासन्मनसा हितः । अयासन् हव्यमूहिषेऽयानो
धेहि भेषजꣳस्वाहा । अग्नये अयस इदम् ॥

चतुर्गृहीतेन स्रुवेण वा प्राजापत्य हुत्वा —

1. प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाꣳस्वाहा ।
प्रजापतय इदम् ।

इध्मप्रव्रश्चनानि अभ्यादाय, प्रायश्चित्तानि जुहोति, 'मनो ज्योति·'
समारभ्य चतुस्त्रिंशदाहुती —

2. मनो ज्योतिर्जुषतामाज्यं विच्छिन्नयज्ञꣳसमिमन्दधातु । या इष्टा उषसो

निम्रुचश्च तास्सन्दधामि हविषा घृतेन स्वाहा । मनसे ज्योतिष इदम् ।

3. अयाश्चा रनभिशस्तीश्च सत्यमित्वमया असि । अयसा मनसा धृतोऽयसा हव्यम् हेषेऽयानोधेहि भेषज स्वाहा । अग्नये अयस इदम् ॥

4. यदस्मिन्कर्मण्यन्तरगाम मन्त्रत: कर्मतो वा । अनयाऽऽहुत्या तच्छमयामि सर्वन्तृप्यन्तु देवा आवृषन्ता घृतेन स्वाहा । देवभ्य इदम् ॥

5. स्वस्ति न इन्द्रो वृद्धश्रवा. । स्वस्ति न 'पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु स्वाहा । इन्द्रपूषतार्क्ष्य बृहस्पतिभ्य इदम ॥

6. यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिस्स्वाहा । अग्नये जातवेदसे विचर्षणय इदम् ॥

7. पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः । पुनर्मे अश्विनायुवं चक्षुराधत्तमक्ष्योस्स्वाहा । अग्नीन्द्राबृहस्पत्यश्विभ्य इदम् ॥

8. भूस्स्वाहा । अग्नय इदम् ।

9. भुवस्स्वाहा । वाय्यव इदम् ।

10. सुवस्स्वाहा । सूर्यायेदम् ।

11. इष्टेभ्यस्स्वाहा । इष्टेभ्य इदम् ।

12. वषडनिष्टेभ्यस्स्वाहा । वषडनिष्टेभ्य इदम् ।

13. भेषजन्दुरिष्टयै स्वाहा । भेषजन्दुरिष्टया इदम् ।

14. निष्कृत्यै स्वाहा । निष्कृत्या इदम् ।

15. दौराध्यै स्वाहा । दौराध्या इदम् ।

16. दैवीभ्यस्तनूभ्यस्स्वाहा । दैवीभ्यस्तनूभ्य इदम् ।

17. ऋद्धय स्वाहा । ऋद्धयै इदम् ।

18. समृद्धय स्वाहा । समृद्धयै इदम् ।

19. यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि स्वाहा । इन्द्राय मघवत इदम् ॥

20. स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करस्स्वाहा । इन्द्रायाभयङ्करायेदम् ॥

21. आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा । इन्द्राय हरिवते वर्धमानायेदम् ॥

22. अनाज्ञातं यदाज्ञातम् । यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय । त्वꣳ हि वेत्थ यथातथꣳ स्वाहा । अग्नय इदम् ॥

23. पुरुषसम्मितो यज्ञः । यज्ञः पुरुषसम्मितः । अग्ने तदस्य कल्पय । त्वꣳ हि वेत्थ यथातथꣳ स्वाहा । अग्नय इदम् ॥

24. यत्पाकत्रा मनसा दीनदक्षा न । यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन् । यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा । अग्नय इदम् ॥

25. भूरग्नये च पृथिव्यै च महते च स्वाहा । अग्नये पृथिव्यै महत इदम् ॥

26. भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । वायवेऽन्तरिक्षाय महत इदम् ॥

27. सुवरादित्याय च दिवे च महते च स्वाहा । आदित्याय दिवे महत इदम् ॥

5

28. भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ।
चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् ॥

29. पाहि नो अग्न एनसे स्वाहा । अग्नय इदम् ॥

30. पाहि नो विश्ववेदसे स्वाहा । विश्ववेदस इदम् ॥

31. यज्ञं पाहि विभावसो स्वाहा । विभावसव इदम् ॥

32. सर्वं पाहि शतक्रतो स्वाहा । शतक्रतव इदम् ॥

33. पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभि-
रूर्जां पते पाहि चतसृभिर्वसो स्वाहा । अग्नयादिभ्य इदम् ॥

34. सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।
सप्त होत्रास्सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा । अग्नये
सप्तवत इदम् ॥

'पुनस्त्वादित्या' इति समिधमाज्यं च ।

1. पुनस्त्वादित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः ।
घृतेन त्वं तनुवो वर्धयस्व सत्यास्सन्तु यजमानस्य कामाः स्वाहा ।
वसुनीथायाग्नय इदम् ॥

(आज्याहुतिः)

2. (पुनस्त्वा + यजमानस्य कामास्स्वाहा । वसुनीथायाग्नय इदम् ॥)

'जातवेदस' आदि पञ्चदश—

3. जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः । सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरितात्यग्निस्स्वाहा । अग्नये जातवेदस इदम् ॥

4. त्र्यम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृताथ्स्वाहा । त्र्यम्बकायेदम् ॥

5. गणानान्त्वा गणपतिꣳ हवामहे कविङ्कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनश्शृण्वन्नूतिभिस्सीद सादनꣳ स्वाहा । गणपतय इदम् ॥

6. ब्रह्मप्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानाꣳ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान्थ्स्वाहा । ब्रह्मण इदम् ॥

7. आश्रावितमत्याश्रावितम् । वषट्कृत मत्यनूक्तश्च यज्ञे । अतिरिक्तं

कर्मणो यच्च हीनम् । यज्ञ पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान्त्स्वाहा । यज्ञायेदम् ॥

8. इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे स्वाहा । विष्णव इदम् ॥

9. विष्णोर्नुकं वीर्याणि प्रवोचम् । यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थम् । विचक्रमाणस्त्रेधोरुगायस्स्वाहा । विष्णव इदम् ॥

10. विष्णो रराटमसि स्वाहा । विष्णव इदम् ॥

11. विष्णोः पृष्ठमसि स्वाहा । विष्णव इदम् ॥

12. विष्णोश्श्नप्त्रे स्थस्स्वाहा । विष्णव इदम् ॥

13. विष्णोस्स्यूरसि स्वाहा । विष्णव इदम् ॥

14. विष्णोर्ध्रुवमसि स्वाहा । विष्णव इदम् ॥

15. वैष्णवमसि विष्णवे त्वा स्वाहा । विष्णव इदम् ॥

चतुर्गृहीतेन वा 'यदस्येति' सौविष्टकृतं जुहोति ।

यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वा-

स्वस्ति सर्वं स्विष्टं सुहुतं करोतु मेऽग्नये स्विष्टकृते सुहुत हुत आहुतीनां

कामानां समर्धयित्रे स्वाहा । अग्नये स्विष्टकृत इदम् ॥

अप उपस्पृश्य । अथ परिस्तरानुल्लिप्य, आज्यस्थाल्यां प्रस्तरवत् अग्रं मध्यं मूलं च बर्हिरक्त्वा, तृणं प्रच्छिद्य, अप उपस्पृश्य, अग्नावनुप्रहरति । तृणं च प्रहृत्य मध्यम परिधि प्रहृत्य, अथेतरावुपसमूह्य, प्रहृत्य, ऊर्ध्वसमिधौ प्रहरति । अथैनां संस्रावेणाभिजुहोति स्रुक्स्रुवाभ्यां 'वसुभ्य' इत्यादि ।

वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यस्संस्रावभागेभ्य-

स्स्वाहा । वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्य स्संस्रावभागेभ्य इदम् ॥

अत्र हुतशेषप्रदानं प्राशनं च । अन्यानि तत्कर्मप्रोक्तानि कार्याणि । अथाग्निं परिषिञ्चति 'अन्वमंस्थाः प्रासावी'रिति ।

अदितेऽन्वमंस्थाः । अनुमतेऽन्वमंस्थाः । सरस्वतेऽन्वमंस्थाः ।

देव सवितः प्रासावीः ॥

अथ प्रणीता आदाय, बर्हिषि निधाय, दिशो व्युन्नीय, दर्शपूर्णमासवत् तृणं प्राच्य जलं विसृज्य, आत्मानं पत्नीं च प्रोक्षति । अथ ब्रह्मणे वरं ददात् । यथाशक्ति वा हुतशेषं मङ्गतम ॥

अत्र स्थालीपाके आयुष्यनक्षत्रहोमादिषु प्राशनम् । 'आयुरसी'ति प्राश्य,

आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्वं म

आयुर्भूयात् । सर्वमायुर्गेषम् ।

अप आचम्य, जठरमभिमृशति 'यत इन्द्र' 'स्वस्तिदा' इति द्वाभ्याम् ।

1. यत इन्द्रभयामहे ततो नो अभयङ्कृधि । मघवन् छग्धि तव तन्न ऊतये वि द्विषो विमृधो जहि ।

2. स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करः ॥

अथ दंपती समिधमाधाय, अग्निमुपतिष्ठते 'अग्ने नये'ति सूक्तेन–

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मत् । जुहुराणमेनः । भूयिष्ठां ते नम उक्तिं विधेम ॥

'मन्त्रहीनमि'ति द्वाभ्यां च कृष्णस्मरणं मुहुः कृत्वा,

मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ।
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते ॥
प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥

अभिवाद्य, भस्म संधार्य, नमस्कृत्य, अञ्जलिं बध्वा, आशिषो सवाचयित्वा, दस्येभ्यो दक्षिणां तबूलं च दद्यात् । दंपती विधिं विना हविश्शेषं न प्राश्नीयाताम् । एष आचारविधिः ॥

## ॥ आपूर्विकविधिरुच्यते ॥

इध्मं ब्रह्माणं प्रणीतां च वर्जयेत् । न वर्जयेद्वा । इध्मादिवर्ज्यपक्षे पूर्वोक्तवत् पात्रसादनान्तं कृत्वा, आज्यस्थालीं, स्रुवंच, जुहूं, प्रोक्षणीं, चरुस्थालीं, मेक्षणं, बर्हिः समिधमिति सादयित्वा, प्रोक्षणीं संस्कृत्य, पात्राणि प्रोक्ष्य, चरु निर्वाप्य, प्रोक्ष्य, अधिश्रित्य, आज्यस्थाल्यामाज्यं निरुप्य, आज्यं संस्कृत्य, स्रुवं जुहूं मेक्षणं च संमृज्य, चरुमभिघार्य, उदगुद्वास्य, प्रतिष्ठितमभिघार्य, आज्यं चरुं बर्हिषि निधाय, अग्निं परिषिच्य, इन्द्रादीनलंकृत्य, समिधमादाय, '(1) मिन्दाहुती व्याहृतीभिश्च हुत्वा, (2) चरुप्रायश्चित्तं च हुत्वा, 'आप्यायस्व, 'सन्त' इति द्वाभ्यां चरुमभिघार्य (3) अव्रत्यप्रायश्चित्तं' कृत्वा, यथोक्तं पक्काहुतिं आज्याहुतिं स्विष्टकृतं च अन्तपरिधि बर्हिपरिधिनिनयनपर्यन्तं कृत्वा । अथ 'मिन्दाहुती' व्याहृतीश्च हुत्वा । अत्र हुतशेषप्रदानं प्राशनं च अन्यानि च कृत्वा, अग्निं परिषिच्य । अत्र स्थालीपाकाग्रयणादौ हुतशेषप्राशनं कृत्वा, अभिमन्त्र्य, अग्निमुपतिष्ठते । इध्मादिविद्यमानपक्षे, पात्रसादनकाले प्रकृतिवत् सादयित्वा, पूर्वैर्मन्त्रैरुपांशु हुत्वा, तत्तत्कर्माणि कृत्वा । अथ उत्सर्गपरिषेचनात्प्राक् इध्मप्रव्रश्चनाधानम् ॥

अशक्तः सङ्कटे रोगे द्रव्याभावे *नृपात्यये ।
कुर्यादापूर्विकेनैव सुकृता चैव सा क्रिया ॥

तत्तत्कर्मावृते दोषे नास्ति कृयं कृतं हि तत् ।
आघा दर्विहोमेन प्रीतास्तु बहुदेवता. ।
आघारदर्विहोमं चापूर्विकं च न योजयेत् ।

---

(1) 31–तमपृष्ठस्थ षष्ठसप्तममन्त्रौ पठित्वा आहुतिः कार्या ।
(2) (3) 19–पृष्ठे मन्त्रो द्रष्टव्यः ।
* नृपाद्भय इति पाठः

उक्तकर्म विना आग्रयणादौ उक्तः उपचारैः विहार । तथाऽपवर्गे विपरीतम् । पित्र्येषु प्राङ्मुख प्रदक्षिणं यज्ञोपवीत दैवानि कर्माणि करोति । ब्राह्मणेभ्यो दक्षिणासहितमभ्यनुज्ञा कृत्वा, अविघ्नपरिसमाप्त्यर्थं विघ्ननायकं संपूज्य, पवित्रपाणिः सङ्कल्प्य, पूर्वाह्णे कुर्यात् ॥

मन्त्रमुक्त्वाऽथवा श्रुत्वा स्वाहेत्यन्ते जुहोत्ययम् ।
वाचयेच्छ्रावयेद्वापि स्वाहाकारं विना गुरु ॥

यथा पङ्के निमग्ना गौः पयः सर्वान् समीक्षते ।
तथा मन्त्रविहीनोऽग्निः रुद सर्वं समीक्षते ॥

मन्त्रहीने क्रियाहीने तस्मिन् काले वदेद्बुध ।
अतिपन्न इदं कार्यं आसीदिति स दोषकृत् ॥

## ॥ अथ सिकतादोषः ॥

भस्मकेशतुषकपालतृणशर्करापिपीलिकादि सिकता वर्जयेत् । शुचयः शुभ्राः सिकताः श्रेष्ठाः । अथ न लोष्टेन न काष्ठेन न शर्करया न नखैः उल्लेखनम् । सुवर्णरजतताम्राणामेकतमेन, शकलेन वा व्रीहिभिः यवैः दर्भैर्वा समुल्लिखेत् । अथ अरत्निमात्राः परिधयः, प्रादेशमात्राः समिधः, आर्द्राः अनार्द्रा वा, साग्रा निरग्रा वा, प्रस्थचतुर्भाग प्रोक्षणी, आज्यस्थाली च प्रस्थार्धं, प्रणीता चरुस्थाली प्रस्थमात्रम् । यद्वा, हविश्शेषं ब्रह्माणं भोजयेदिति न्यायेन चरुस्थाली द्विप्रस्थमात्रमेव मेक्षणं, स्रुव, दर्वी चारत्निमात्रम् । अथ व्याधिविवर्णा कृमिकीटदष्टछिन्नाग्रदग्धमूलविवर्जितान् चतुरङ्गुलादिकबाहुममान् दर्भाना-हरेत् । शतमष्टोत्तर दर्भाः । 'द्वे हस्ते पवित्रे, द्वे आसने, कूर्चं सप्तदश प्रजापतिरि'ति न्यायेन सप्तदशदर्भैः कुर्यात् ।

अग्निद्योते च पर्यग्निकरणे च परिस्तरान् बर्हिश्च विसृजेत् । अन्त.क्रिया चेदनले दहेत् ।

शिरोग्रन्थि च मूल च चतुर्भिः षोडशाङ्गुलम् ।
सप्तभिर्दशभिर्दर्भैः इति कूर्चस्य लक्षणम् ॥

द्विरङ्गुल तु मूलं स्यात् ग्रन्थिरेकाङ्गुलं भवेत् ।
होमे हस्तपवित्रे तु पुच्छे तु चतुरङ्गुलम् ॥

बर्हि. प्रादेशको मुष्टिः शुल्बे द्वेऽरत्निमात्रके ।
होमद्रव्याणि सर्वाणि सिकतामिन्धन तुषम् ॥

वस्त्रं च द्रव्यमन्यच्च सर्व प्रोक्ष्योपयोजयेत् ।
प्रस्था धान्यं चतुष्षष्टिः आहुतीनां च निर्णयम् ॥

तिलहोमस्तदर्धेन तदर्धेन घृताहुतिः ।
यमन्याव.ग्यतो वाग्नि ज्वलयेदंशनात्स्पृशेत् ॥

सर्वत्र छेदन-भेदन-खनन-निरसन-पितृ-राक्षस-नैर्ऋत-रौद्रीयाभिचरणीयेषु अप उपस्पृशेत् । अङ्गस्पर्शने च ।

यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः ।
अन्तः परिधिर्वेद्या च पात्रे हस्ते च बर्हिषि ॥

हविराज्यादि होमानां स्कन्नदोषो न विद्यते ।
स्रुवेणाज्यं च दर्व्याशु जुह्वा वा मेक्षणेन वा ॥

अनादेशे सकृद् ग्राह्यं जुह्वा सर्वत्र हूयताम् ।

गणहोम-ग्रहातिथ्यहोमार्तवहोम-षाण्मासप्रायश्चित्तादौ च सकृद्ग्राह्यम् ।

ओषध्यः सक्तवः पुष्प काष्ठमूल फल तृणम् ।
एतद्धस्तेन होतव्यं नान्यत्किञ्चिदचोदनात् ॥

हस्तेन बलिहरणं च । यत्रैका आम्नाता स्यात्, ता द्विरभ्यावर्तयेत् ।
अनाम्नातेषु 'भूर्भुवस्सुवरोमि'ति अनन्य सावित्र्या जुहोति ।

अग्निहीनमनावृष्टि. म त्रहीन तु ऋत्विज ।
आज्यहीनं कुल हन्ति स्वरहीनं तु पत्नयः ॥

यजमानं दक्षिणाहीनमन्त्रहीनं तु राष्ट्रकम् ।
सर्वहीन सदस्येभ्यो नास्ति यज्ञसमो रिपुः ।

तस्मात्सर्वप्रयत्नेन किञ्चिद् द्रव्यं समाचरेत ॥
सदस्या सर्वदेवत्या. तस्मात् संपूजयेद् गुरुम् ।

कुशपात्राजिन वास उपयुक्तं पुनः शुभम् ।
सप्रोक्ष्याद्भि. व्याहृतीभिः इति शास्त्रविदो विदुः ॥

पैतृके दर्विहोमः स्यात् प्रेतकर्माणि सर्वदा ।
समिद्वत्येव होतव्यं श्रिनाया सर्वकर्मसु ॥

स्रुक्स्रुव मेक्षणं चैव पालाशं पात्रमुच्यते ।
मध्यपर्णेन वा तस्य प्रकुर्यादन्तमेन वा ॥

दक्षिणं पादमन्त च वहि. सर्व विशेत्सदा ।
जान्वोर्मध्ये कराभ्या तु सर्वकर्म समाचरेत् ॥

कांस्यमृण्मयपात्राणि पात्राण्येकविधानि च ।
गवामाज्येन होतव्यं गव्ययुक्तघृतेन वा ॥

कुशाः श्रेष्ठतमा दर्भा. विश्वामित्राश्च कर्मणाम् ।
एतेषामेक एव स्याद्योजनीयो मिथो न हि ॥

भानुवारे तु गृह्णीयात् सप्ताहं संप्रयोजयेत् ।
दर्शे दर्शे तु गृह्णीयात् तत्तन्मासं प्रयोजयेत् ॥

सहस्ये चेत्तु षाण्मासं तपोमासे तु वत्सरम् ।
नभस्येऽब्दं तथा दर्शे पूर्वाह्णे समरेद् बुधः ॥

कालातीतकुशाद्यास्तु योजनीयास्त्वसम्भवे ।
दर्भादि संभवेद् यत्र तत्र गत्वा जपेन्नर. ॥

विरिञ्चनासिकोत्पन्न परमेष्ठीपरिग्रह ।
नुद पापानि सर्वाणि दर्भ स्वस्तिकरो मम ॥

इति प्रणम्य गृह्णीयान्मुष्टीनामयुजं द्विजः ।
श्रद्धापूर्वं यजेद्विद्वान् उद्देश्यत्यागपूर्वतः ॥

आचार्येण स्वयं वापि यानि कर्माणि संचरेत् ।
एकेनासाध्यकर्माणि सह विप्रैः समाचरेत् ॥

विप्रैरिति, विद्वद्भिरित्यर्थ ॥

हस्तारंभः प्रवेशं च श्रवणं दर्शनं वचः ।
शोभनं महता कुर्युः असता चेदशोभनम् ॥

गुरोरभावे तत्पुत्रात् तच्छिष्यज्ञातिबान्धवात् ।
अध्येतव्यमधीयीत न तु गुर्वन्तरं व्रजेत् ॥

अथ गुर्वादिविशेषमाह—

उत्पाद्य पुत्रं संस्कृत्य वेदमध्याप्य यः पिता ।

कुर्याद्वृत्तिं च मन्त्रांश्च महागुरुरुदाहृत. ॥

अयमेव श्रेष्ठगुरुः—

उपनीय तु यः शिष्यं वेदमध्यापयेदथ ।
उपदेष्टा तु मन्त्राणां आचार्यः परिकीर्तितः ॥

वेदमध्याप्य किञ्चिद्वा मन्त्राणामुपदेशकः ।
गुरुरित्युच्यते यद्वा निषेकादेस्तु याजकः ॥

केवलं वेदमध्यप्याप्युपाध्यायः स उच्यते ।
श्रुतवृत्तगुणैर्युक्तो श्रोत्रियोऽध्वर्युरुच्यते ॥

अदृष्टार्थानि कर्माणि ह्याचार्येण समाचरेत् ।
तदभावे गुरुः कुर्यात् सर्वाभावे परस्परम् ॥

ऋत्विक्पुत्रो गुरुर्भ्राता जामाता भगिनीसुत. ।
शिष्याश्चैते हुत यस्य सहुतं स्वयमेव हि ॥

एतद्वचनं स्वयंकरणहोमविषयम् ।

औपासनादौ—

प्रोक्षेदुत्तानहस्तेन नीचो हस्तादवेक्षणम् ॥
अभ्युक्षण मुष्टिना तु तथैव परिषेचनम् ॥

स्पृष्ट्वैव वामहस्तेन घृतस्थाली घृत हुनेत् ।
आज्याहुतिप्रमाणं स्यात् धारायाश्चतुरङ्गुलम् ॥

अङ्गुष्ठपर्वमात्रं स्यादेतद्दानप्रमाणकम् ।
पुरोनुवाक्यामन्त्रौ द्वौ प्राकृतस्य स्वर विना ॥

प्रणवेन सुमधाय द्वयोरर्धर्च आरभेत् ।
व्याहृतीपूर्वयुक्तस्तु पश्चादर्धर्च आरभेत् ॥

सन्धाय प्रणवं मध्ये प्लुतमेव तयोर्वदेत् ।
आस्ते प्रत्यङ्मुखो वह्निराज्यभागौ तु चक्षुर्षा ॥

शरोऽङ्गारेषु होतव्यं हविर्मध्ये हुनेदथ ।
प्रागन्त वाप्युदीच्यन्तं प्रागुदक् स्विष्टकृद्धुति ॥
अङ्गुष्ठतर्जनीभ्या तु जुहुयाच्च स्रुवाहुतीः ।

अथ, "एकविंशतिमिध्मदारूणि भवन्ति । त्रीन् परिधीन् परिदधाति । ऊर्ध्वे समिधावादधाति । अनुयाजेभ्य समिधमतिशिनष्टि । पञ्चदशेध्मदारूण्यभ्यादधाति । प्रस्तरवत् बर्हिःप्रहरः । नात्यग्र प्रहरेत् । प्राञ्चं प्रहरति । ऊर्ध्वमुद्यूति । असंस्कृतप्रोक्षणी अप्रोक्षितपात्राणि तत्पात्रहोमश्च असंमार्जने स्रुक्स्रुवेणाधिश्रितपक्व असंस्कृताज्यं, एतैः प्रचरेद्यदि यातुधाना असुरा रक्षांसि पिशाचा यज्ञं ग्राहयेयुः । सर्वत्र परिसमूहनपर्युक्षणपरिस्तरणालकाराभिद्योतनपर्यग्निकरणपरिषेचनमित्याचार्याः ।

शरद्व्रीहियवाना च तण्डुला हविषा शुभाः ।
इन्धनाख्यानि काष्ठानि याज्ञीयानि शुभानि तु ॥

त्रिपुण्ड्र भस्मना तिर्यक् सन्ध्याकाले तु वारिणा ।
भस्मना होमकाले तु चन्दनं सर्वकालिकम् ॥

इति न्यायेन पूर्वानुष्ठितं कार्यम् ।

नदीतीर्थं तटाकस्थं शुभ कूपजलं विना ।

इति न्यायेन सर्व विचार्य कुर्यात् ।

**अथ, अग्निनिर्णय उच्यते—**

आत्मार्थं चैव दारार्थमुभयार्थं च सर्वथा ।
कुर्यादौपासने वह्नौ परार्थ लौकिकानले ॥

गर्भादिजातकर्मान्तं कुर्यादौपासनानले ।

भार्याद्वय यस्य भवेच्च तस्य संसृष्टवह्नौ सवनं प्रकुर्यात् ।
तत्रैव सीमन्तमपि प्रशस्त वदन्ति वह्नेर्न विभाग इष्टः ॥

प्रधानस्य तु यो वह्निः तस्मिन्नान्दीमुखी क्रिया ।
कार्या कर्माङ्गभूतत्वात् मृतकाग्निस्तु लौकिकः ॥

तत्समारोपणे पक्षे नामाद्यपनयादधः ।
लौकिकाग्नौ प्रयोक्तव्य मथित्वोपनयादिकम् ॥

उत्सृष्टसूतकाग्निश्चेत् नामाद्युपनयादधः ।
औपासनैकदेशः स्यात् अपवृत्ते तु लौकिकः ॥

जातकर्म कृतं तत्र तस्यायुत्सृष्टवह्निवत् ।
उपनीत्यादिक सर्व विवाहान्त च लौकिके ॥

नक्षत्रायुष्यहोमौ च सगण. प्राशनोक्तितः ।
कुर्यादौपासने सर्व लौकिके त्वक्षरक्रियाम् ॥

विवाहात्परतः स्मार्तं सर्वमौपासने स्मृतम् ।
तदर्धे वास्तुहोम. स्यादपवृत्ते तु लौकिक. ॥

मधुपर्कवपाहोमो लौकिकाग्नौ प्रकीर्तितः ।
औपासने वा पचने वैश्वदेव विकल्पयेत् ॥

ब्रह्मचर्याहिताश्चापि विधुरश्चाप्युपाकृतौ ।
'पुनस्त्वे'त्यग्निमुत्पाद्य कुर्यात्पश्चा लौकिक. ॥

तन्त्रहोमे प्रधानस्य सर्वमुक्तानले चरेत् ।
ऋतुशान्तिस्तथा शान्तिकल्पोक्तानि तथैव च ॥

दुहितुर्गृहयज्ञादि सर्व कुर्यात्तु लौकिके ।

अर्कोद्वाह प्रतिष्ठादि लौकिकाग्नौ प्रकीर्तितम् ॥
शुभेषु कर्मस्वेतावत् सूरिभिस्सुलभं स्फुटम् ।

इति कनकसभापतिविरचिते प्रयोगादर्शे
प्रथमः परिच्छेदः समाप्तः ॥

—*—

## ॥ अथ नवग्रहयज्ञः ॥

अथ ग्रहातिथ्यकर्म वक्ष्यते—

अश्रद्दधानमशुचिमजपं त्यक्तमङ्गलम् ।
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥

ग्रहाणामुग्रचेष्टाना नक्षत्रपथचारिणाम् ।
उपहारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि ॥

मासिमास्यृतौ विषुवायने चन्द्रसूर्योपरागे शुभकर्मादौ अशुभकर्मान्ते जन्मनक्षत्रे वा कुर्यात् । ग्रहव्याधिपीडने संवत्सरादपि प्रयुञ्जानः सर्वकामानवाप्नोति । मासि मासि, जन्मनक्षत्र इत्यर्थः । 'आदित्यपुरोगाः ग्रहाः प्रीयन्तामि'ति । अथ देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा, चरून्निर्वपति । उक्तप्रकारेण पृथक् पृथक् प्रोक्षणाधिश्रयणान्तं कुर्यात् । यद्वा, द्रव्यैक्यात् एकभाण्डे पचनम । तत्र, 'आदित्यादि देवताभ्यो वो जुष्टं निर्वपामि' । 'आदित्यादिदेवताभ्यो जुष्ट प्रोक्षामि' इत्येवं कृत्वा, आपरिधानात् कृत्वा, अग्रेणाग्निं शालितण्डुलराशिषु चतुरश्रेषु नवभाग कृत्वा, सपवित्रेषु भागेषु मध्ये आदित्यावाहनम् । 'आसत्येन' 'अग्निं दूतम्' 'येषामीशे' ।

(आदित्यः)

1. आसत्येन रजसा वर्तमानो निवेशयन्नमृत मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन् ॥

2 अग्निन्दूतव्वृँणीमहे होतारव्विँश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम ॥

3. येषामीशे पशुपतिः पशूनाञ्चतुष्पदा मुतच द्विपदाम । निष्क्रीतोऽयय्यँज्ञिय भागमेतु रायस्पोषा यजमानस्य मन्तु ॥ भूर्भुवस्सुवरोम् ।

रक्तवर्णं किरीटिनं पद्मासनमधिदेवताप्रत्यधिदेवतामहित रक्तमण्डले पूर्वाभिमुखं, आदित्यमावाहयामि । अधिदेवताप्रत्यधिदेवतासहितस्य आदित्यस्य इदमासनम् ॥

एवं मन्त्रानुक्रमण्युक्तप्रकारमन्त्रैरावाहयेत् । यद्वा, मन्त्रत्रयमुक्त्वा,

(अङ्गारकः)

1. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳरेताꣳसि जिन्वति ॥

2. स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छानश्शर्म सप्रथाः ॥

3. क्षेत्रस्य पतिना वयꣳहितेनेव जयामसि । गामश्वं पोषयित्न्वा सनो मृडाती दृशे ॥

भूर्भुवस्सुवरो, सदेशं सगोत्रं सवर्णं सर्षिच्छन्दस अधिदेवताप्रत्यधिदेवतासहितं, रक्तमण्डले रक्तवर्णं दक्षिणाभिमुखमङ्गारकमावाहयामि ॥

(शुक्रः)

अथ पूर्वभागे 'प्रवश्शुक्राय' 'इन्द्राणीमासु', 'इन्द्रं वः' ।

1. प्रवश्शुक्राय भानवे भरध्व हव्यं मतिञ्चाग्नये सुपूतम् । यो दैव्यानि मानुषा जनूᳬष्यन्तर्विश्वानि विद्मना जिगाति ॥

2. इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम न ह्यस्या अपरञ्चन जरसा मरते पतिः ॥

3. इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥

भूर्भुव सुवरोम् ।

पञ्चकोणमण्डले प्राङ्मुखं शुक्लवर्णं भगवन्तं शुक्रमावाहयामि ॥

(सोमः)

अथ पूर्वदक्षिणतः 'आप्यायस्व' 'अप्सु मे', 'गौरीमिमाय' ।

1. आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥

2. अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निञ्च विश्वशम्भुव-मापश्च विश्वभेषजीः ॥

3. गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ भूर्भुवस्सुवरोम् ।

चतुरश्रमण्डले शुक्लवर्णं प्रत्यङ्मुखं सोममावाहयामि ॥

(बुधः)

पूर्वोत्तरे 'उद्बुध्यस्व', 'इदं विष्णुः', 'विष्णोररटमसि' ।

1. उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयञ्च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसी त्वयि तन्तुमेतम् ॥

2. इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳसुरे ॥

3. विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥ भूर्भुवस्सुवरोम् ।

बाणमण्डले प्राङ्मुखं पीतवर्णं बुधमावाहयामि ॥

(बृहस्पतिः)

उत्तरे, 'बृहस्पते अति' 'इन्द्र मरुत्व', 'ब्रह्मजज्ञानम्' ।

1. बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणन्धेहि चित्रम् ॥

2. इन्द्रमरुत्व इह पाहि सोमं यथा शार्याते अपिबस्सुतस्य । तव प्रणीती तव शूरशर्मन्नाविवासन्ति कवयस्सुयज्ञाः ॥

3. ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः ॥ भूर्भुवस्सुवरोम् ।

दीर्घचतुरश्रमण्डले पीतवर्णं उदङ्मुखं बृहस्पतिमावाहयामि ॥

(शनैश्चरः)

पश्चिमे, 'शन्नो देवी, 'प्रजापते न त्वत्' , 'इमं यमप्रस्तरम्' ।

1. शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥

2. प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

3. इमं यमप्रस्तरमा हि सीदाङ्गिरोभिः पितृभिस्संविदानः । आत्वा मन्त्राः कविशस्तावहन्त्वेना राजन् हविषा मादयस्व ॥ भूर्भुवस्सुवरोम् ।

धनुर्मण्डले प्रत्यङ्मुखं कृष्णवर्णं शनैश्चरमावाहयामि ॥

(राहुः)

दक्षिणपश्चिमे, 'कया नश्चित्र' 'आयं गौः', 'यत्ते देवी' ।

1. कया नश्चित्र आभुव दूती सदा वृधस्सखा । कया शचिष्ठयावृता ॥

2. आयंगौः पृश्निरक्रमी दसनन्मातरं पुनः । पितरञ्च प्रयन्त्सुवः ॥

3. यत्ते देवी निर्ऋतिराबबन्ध दामग्रीवास्वविचर्त्यम् । इदन्ते तद्विष्या-

म्यायुषो न मध्या दथा जीवः पितुमद्धि प्रमुक्तः ॥ भूर्भुवस्सुवरोम् ।

शूर्पमण्डले कृष्णवर्णं दक्षिणामुखं राहुमावाहयामि ॥

(केतुः)

पश्चिमोत्तरतः, 'केतुं कृण्वन्', 'ब्रह्मा देवानां' 'सचित्र चित्रम्' ।

1. केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥

2. ब्रह्मा देवानां पदवीः कवीना मृषिर्विप्राणां महिषो मृगाणाम् ।

श्येनो गृध्राणाꣳस्वधितिर्वनानाꣳसोमः पवित्रमत्येति रेभन् ।

3. सचित्र चित्र चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् । चन्द्रं

रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ भूर्भुवस्सुवरोम् ।

ध्वजमण्डले दक्षिणाभिमुखान् कृष्णवर्णान् केतूनावाहयामि ॥

अथात्र केचित् नक्षत्राराधनं वदन्ति । तत्तन्नक्षत्रमन्त्राभ्या जन्मनक्षत्रस्य । अथ क्रमेग पाद्यमर्घ्यमाचमनीयं दद्यात् । अधिदेवताप्रत्यधिदेवतासहिताय अदित्याय नमः । इदं पाद्यमिदमर्घ्यमिदमाचमनीयं इत्येवं सर्वेषामपि । अथ मधुपर्कपूजा कर्तव्या । फलगुलादिना वा । परिधानप्रभृति अग्निमुखात् कृत्वा, समिदाहुतीः क्रमेण जुहुयात् तत्तन्मन्त्रेण । तथाज्याहुतिः । अष्टसहस्रं अष्टशतमष्टाविंशति वा जुहुयात् । प्रत्येकमधिदेवताप्रत्यधिदेवतानां पक्षे द्वे आहुती अधिके तत्तद्ग्रहहोमानन्तरं कुर्यात् तत्तन्मन्त्रेण । अर्कसमिधमादित्याय ।

खादिरमङ्गारकाय । औदुंबरं शुक्राय । पालाशं सोमाय । अपामार्गं बुधाय । अश्वत्थं बृहस्पतये । शमीमर्या शनैश्चराय । राहवे दूर्वाः । केतवे कुशाः इति । सर्वेषामभावे पालाशीर्वा । अथान्नाहुतीः क्रमेण कुर्यात् । गुलोदनमादित्याय । हविष्यमन्नमंगारकाय । घृतोदनं शुक्राय । घृतपायसं सोमाय । क्षीरोदनं बुधाय । दध्योदनं बृहस्पतये । तिलपिष्टमाषोदनं शनैश्चराय । राहवे मांसोदनम् । केतवे चित्रोदनमिति । सर्वेषामभावे हविष्यं वा ।

अन्नादेशे सकृद्ग्राहं जुह्वा सर्वत्र हूयतम् ।

मेक्षणेनोपघातं वा ............ ।

**अथ क्रमेणाज्याहुतिः—**

तत्तन्मन्त्रेणाथ स्वीकृतं क्रमेणावदाय, सादयित्वा, व्याहृतीः, आज्याहुतीर्हुत्वा । नक्षत्रदेवताहोमपक्षे तत्तन्नक्षत्राज्याहुतीश्च 'सोमं राजानमि'ति सौविष्टकृतीं जुहोति ।

सोमꣳराजानं वरुणमग्निमन्वारभामहे । आदित्यान् विष्णुꣳसूर्यं ब्रह्माणञ्च बृहस्पतिम् ॥

*जयप्रभृति संस्रावान्त हुत्वा, ग्रहदेवता अर्चयति—

'(1) आपोहिष्ठा मयो भुव' इति तिसृभिः (2) हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभि, (3) 'पवमानः सुवर्जन ' इत्येतेनानुवाकेन स्वेन स्वेन मन्त्रेण च स्नापयित्वा तर्पयति, 'आदित्यं तर्पयामि' इत्यादिभिः ।

* 21-तमपृष्ठादारभ्य जयप्रभृतयो होमा द्रष्टव्याः ।

1. 'आपोहिष्ठादि' ऋचः 7-पृष्ठे द्रष्टव्याः ।
2. 'हिरण्यवर्णा' इत्यादयः 8-पृष्ठे द्रष्टव्याः ।
3. 'पवमाना'नुवाकः 8, 9, 10-पृष्ठेषु द्रष्टव्यः ।

अथ तत्तन्मंत्रेण, 'वस्त्रयज्ञोपवीतोत्तरीयाभरणार्थे इमे अक्षताः' इत्यक्षतै-रभ्यर्च्य, 'एते गन्धाक्षतपुष्पदीपधूपादयः सर्वाभरणालंकाराः सर्वोपचारा' इति प्रत्येकं सपूज्य, तद्धविर्निवेदयति। तत्तन्मन्त्रेणोपस्तरणादि कृत्वा, परिषेचनादि कृत्वा, 'आदित्यादिग्रहेभ्य: अधिदेवता प्रत्यधिदेवता नक्षत्रदेवता सहितेभ्य, यद्धुतशेषं तद्धविर्निवेदयामि। आचमनीयं समर्पयामि'। एवमादि सर्वेषामेकत्र वा दद्यात्। अथ 'ताम्बूलं यथाभागं समर्पयामि'। ग्रहमन्त्रै प्रदक्षिणत्रयं कृत्वा, नमस्कृत्य, 'तत्तत्कर्मसाद्गुण्यार्थं आदित्यादिनवग्रहप्रीत्यर्थं मया कृतनवग्रहयज्ञकर्म यथाशास्त्रं भूयात्' इत्यनुज्ञाप्य, ग्रहान् तत्तन्मन्त्रेणोद्वास्य, तण्डुलानेकत्र कुर्यात्। न्यूनाधिकयोरिति। अपरेणाग्निमुपविश्य, पवित्रैरभिमार्ज-यति। 'आपो हि ष्ठामयो भुव' इति तिसृभिः।

अथ दक्षिणां ददाति। कपिलां धेनुमादित्याय। रक्तमनड्वाहमंगा-रकाय। रजतं शुक्राय। शङ्खं सोमाय। काञ्चनं बुधाय। वासो बृहस्पतये। कृष्णां गां शनैश्चराय। राहवे छागम्। केतवे कुञ्जरमिति। सर्वेषामभावे हिरण्यं वा, येन वा तुष्येदाचार्यस्तथा कर्तव्यम्। एवं दातुमशक्तः आचार्याय प्रीतिं कुर्यात्। क्षत्रियविषयं वा। परिषेचनादिकं कुर्यात्।

अग्निर्भूमिः शुचितोयं विष्णुरिन्द्रः प्रजापतिः।
सर्वे ब्रह्मादिदेवाः स्युरध्यादीना यथाक्रमम्॥

ईश्वरः संक्रन्द इन्दश्च हयुमा विष्णुस्तथैव च।
ब्रह्मा यमश्च काळी च चित्रगुप्तः क्रमात्परे॥

इति प्रत्यधिदेवाः।

यथा शस्त्रप्रहरणात् कवचं भवति वारणम्।
एवं देवोपघातानां शान्तिर्भवति वारणम्॥

अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहाः स्मृताः ॥

ग्रहा गावो नरेन्द्राश्च ब्राह्मणश्च विशेषतः ।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिता. ॥

ईश्वरं भास्कर विद्यात् स्कन्दमङ्गारकं तथा ।
शुक्र शचीपति विद्यात् उमा चैव निशाकरम् ॥

बुधं नारायणं विद्यात गुरुं विद्यात् प्रजापतिम् ।
यमं शनैश्चर विद्यात् राहु कालं तथैव च ॥

केतुमग्निमय विद्यात् देवता ग्रहभाविनाः ।
देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम् ॥

इत्येवंन्यायेन ग्रहप्रीति कुर्यात ।

'अमुकनक्षत्रस्य जातस्य ग्रहयज्ञमादूगुण्यार्थं ग्रहप्रीत्यर्थं नव ब्राह्मणान् भोजयित्वा, आशिषो वाचयित्वा, प्रदानमात्रमिति भावेन कुर्यात् ।

## नान्दीमुखश्राद्धम्

अथवा, हिरण्यश्राद्ध कुर्यात् । 'अमुकनक्षत्रजातस्य अमुकनामधेयस्य श्वःकरिष्यमाणामुककर्माङ्गं हिरण्यरूपेण नान्दीमुखश्राद्धं करिष्ये' इति संकल्प्य, ब्राह्मणानामन्त्र्य, अभ्यर्च्य, हिरण्य दद्यात । 'मातुः श्राद्धं तु पूर्वं स्यात्' इति न्यायेन 'सर्वेषा प्रीत्यर्थं, यथासंभव हिरण्यं नानागोत्रेभ्यो ब्राह्मणेभ्यः संप्रददे न मम' इति दत्वा ।

अथ शुक्चतुष्टयं पुष्पफलाक्षतमिश्रैः यवैः तिलदर्भमुपलिप्य, दध्योदन संप्रकिरेत । प्रागग्रेषु दर्भेषु अष्टौ बलीन् हरेत् । अग्नये स्वाहा । सोमाय

स्वाहा । प्रजापतये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ऋषिभ्यः स्वाहा । भूतेभ्यस्स्वाहा । पितृभ्यस्स्वाहा । सर्वेभ्यो देवेभ्यस्स्वाहा । आचन्तं परिषेचनम् । अथ, 'नान्दीमुखाः पितरः प्रीयन्तामि'ति वाचयित्वा, तथैव प्रतिवचनम् । अभिवाद्य, प्रणम्य, उदकुम्भं निधाय, दक्षिणं जानुं निपात्य, *'इडा देवहूति'रिति जपित्वा, आपो निनीय, उत्थाय, प्रदक्षिणीकृत्य, अशेषमनुज्ञाप्य द्विजान् विसर्जयेत् । हिरण्यश्राद्धपक्षे पिण्डप्रदानं न कुर्यात् । जातकर्म तत्काले अकृत्वा, कालान्तरे कर्तव्ये, नान्दीमुखं कर्तव्यम् । अथ तन्त्रहोमपक्षे नान्दीमुखं कथम् ?

गर्भादितन्त्रहोमे तु नान्दीश्राद्धं पृथक् पृथक् ।
प्रतिसरं तु तन्त्रेण तन्त्रेणाङ्कुरवापनम् ॥

नान्दीमुखश्राद्धं सद्य कालेऽपि केचित्कुर्वन्ति । गौणपक्ष एवायम् । नान्दीश्राद्धे दश ब्राह्मणान् भोजयेत् ॥

गर्भादि विष्णुकर्मान्तमन्नचौलोपनीतिषु ।
स्नानोद्वाहप्रतिष्ठासु पत्न्याधानमुखेषु च ॥

कुर्यात् प्रतिसरं विद्वान् रात्रौ नान्दीमुखान्तिके ।
प्रदोषान्तेऽथवा कुर्यात् सद्यो वाङ्कुरकौतुकम् ॥

आधानपशुसोमेषु विवाहेषु द्वयोरपि ।
गर्भादिविष्णुकर्मान्ता क्रिया एव तु कौतुकम् ॥

नान्दीमुखं प्रतिसरं तथैवाङ्कुरवापनम् ।
कन्यायाश्च शिशोश्चैव तत्तद्योग्यं समाचरेत् ॥

* 11-तमपृष्ठे 'इडा देवहूति'रित्ययं मन्त्रो द्रष्टव्यः ।

'नामादि नान्दीकरणमि'ति न्यायेन ।

अथ अश्वत्थराजन्य पुनर्जननादि मौञ्जीक्रियासु च, शताभिषेके, राजाभिषेके च पुनर्विवाहे नान्दीमुख प्रतिसरं च कुर्यात् । यस्मिन् दिने नान्दीमुखं कुर्यात् तस्या रात्र्या प्रदोषान्ते प्रतिसरमारभेत । इत्याचार्यकृत्यम् ॥

## ॥ प्रतिसर ॥

आचार्यो ब्राह्मणै: सार्धं चतुर्भि कौतुकं चरेत् ।
व्रीहिभि स्थण्डिलं कुर्यात् शान्तिन्यायेन मानव: ॥

दर्भेष्वासीनो दर्भान धारयमाण, सैकतवन्धस्थण्डिलमुल्लेखन च कृत्वा, दूर्वाक्षतफलैरवकीर्य, गन्धोदकेन अभ्युक्ष्य, पुष्पैः अवकीर्य, दर्भैरासन कृत्वा, नवरत्नकुम्भ पणद्वात्रिंशत्प्रस्थपूरितं तन्तुवेष्टितं सधूपित (1)'ब्रह्म जज्ञानं' इति स्थण्डिले निधाय, सपवित्रं कुम्भं व्याहृतीभिः शुद्धोदकै: पूरयित्वा, 'ओं भूर्भुवस्सुरोमि'त्यक्षतान्निक्षिप्य, हिरण्यं नवरत्नं चान्तर्निधाय, चूतपल्लवै-रवकीर्य, बिल्वपल्लवैर्वा नालीकेरफलेन वा अपिधाय, पूर्वाभिमुखे. प्रच्छाद्य, कुम्भमलंकृत्य, तूष्णीं परिस्तीर्य, (2)'इमं मे वरुण'इति वरुणमावाह्य, आसनादिभि-रभ्यर्च्य' फलानि निवेद्य, उत्तरतः शालीतण्डुलस्योपरि ताम्बूलभस्मयुक्तं नवतन्तुप्रतिसरसूत्रं गन्धानुलिप्तं निधाय, प्रतिसरबन्धजपार्थं ब्राह्मणान् प्रतिदिशं स्थितानामन्त्र्य, अभ्यर्च्य, 'प्रतिसरबन्धमन्त्रजपं कुरुध्वम्' इत्याचार्येण वदेत । 'कुर्म' इति प्रतिब्रूयुः । कुम्भमन्वारभ्य सर्वे जपेयुः ।

1. 'ब्रह्मजज्ञानमि'त्ययं मन्त्रः 13–तमपृष्ठे द्रष्टव्यः ।

2. 'इमं मे वरुणं' इत्ययं मन्त्र· 29-तमपृष्ठे द्रष्टव्यः ।

(1) सावित्र्यपस्य ऋचोऽष्टाः सर्वाः—

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।

(2) चतुरो वेदादीन्—

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।
इषे त्वोर्जे त्वा वायवस्स्थोपायवस्स्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि। शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः॥

(3) 'कृणुष्वपाज' इति अनुवाकम्—

(रक्षोघ्नम्)

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाꣳ इभेन। तृष्वीमनुप्रसितिन्द्रूणानोऽस्तासि विध्यरक्षसस्तपिष्ठैः। तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः। तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः। प्रतिस्पशो विसृज तूर्णितमो भवापायुर्विशो अस्या अदब्धः। यो नो दूरे अघशꣳसः॥

यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्। उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ ओषतात्तिग्महेते। यो नो अरातिँ समिधानचक्रे नीचातन्धक्ष्यतसन्नशुष्कम्। ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरातनु हि यातुजूनाञ्जामिमजामि प्रमृणीहि शत्रून्। स ते जानाति सुमतिय्यविष्ठय ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभिद्यौत्। सेदग्ने अस्तु सुभग स्सुदानु र्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिनासासदिष्टिः। अर्चामि ते सुमतिङ्घोष्यर्वाक्सन्ते वावाताजरताम्। इयङ्गीः॥

स्वश्वास्त्वा सुरथामर्जयेमास्मे क्षत्राणि धारये रनुद्यून्। इह त्वा भूर्याचरेदुपत्मन्दोषावस्तर्दीदिवाँसमनुद्यून्। क्रीडन्तस्त्वा सुमनस-स्सपेमाभिद्युम्ना तस्थिवाँसो जनानाम्। यस्त्वा स्वश्वस्सुहिरण्यो अग्न उपयाति वसुमता रथेन। तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत्। महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गो-तमादन्वियाय। त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो

दमूना । अम्म्वप्रजस्तरणयम्सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठा । ते पायवस्सध्रियञ्चो निषद्याग्ने तवनः पान्त्वमूर । ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धन्दुरितादरक्षन् । ररक्षतान्थ्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाहदेभुः ॥

त्वया वय-मघवन्यस्त्वोता स्तव प्रणीत्य श्यामवाजान । उभाश-सा सूदय सत्यतातेऽनुष्ठया कृणुह्यह्याण । अया ते अग्ने समिधा विधेम प्रति स्तोम-शस्यमानङ्गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात । रक्षोहणंवाजिनमाजिघर्मि मित्र प्रथिष्ठ मुपयामि शर्म । शिशानो अग्नि क्रतुभिस्समिद्धस्स नो दिवा सरिष पातु नक्तम् । विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महि त्वा । प्रादेवीर्मायास्सहते दुरेवाश्शिशीते शृङ्गे रक्षसे विनिक्ष्ये । उतस्वानासो दिविषन्त्वग्ने स्तिग्मायुधा रक्षसे हन्तवाउ । मदेचिदस्य प्ररुजन्ति भामा नवरन्ते परिबाधो अदेवी । अघश-सस्मन्ते जरता-रजामि हृदिवेकृनत्वाप-शञ्च ॥

(4) 'अग्ने यशस्विन्नि'ति चतस्रः —

'अग्ने यशस्विन् यशसेमर्पयेन्द्रावतीमपचितीमिहावह । अयं मूर्धा परमेष्ठी सुवर्चास्समानानामुत्तमश्लोको अस्तु ॥ भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं बलमोजश्च जातन्तदस्मै देवा अभिसन्नमन्तु ॥ धाता विधाता परमोतसन्दृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभिसन्नमाम ॥ अभ्यावर्तध्वमुपमेत साकमयꣳ शास्ताधिपतिर्वो अस्तु । अस्य विज्ञानमनुसꣳरभध्वमिमं पश्चादनु जीवाथ सर्वे ॥

(5) 'हिरण्यवर्णाः', 'पवमानस्सुवर्जन' इत्येतावनुवाकौ---

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपश्शꣳ स्योना भवन्तु ॥ यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शꣳ स्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं

पयसोन्दन्ति शुक्रास्ता न आपश्शगं स्योना भवन्तु ॥ शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोप स्पृशत त्वचं मे । सर्वागं अग्नीगं रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त ॥

यददस्सम्प्रयती रहावनदता हते । तस्मादानद्यो नामस्थतावो नामानि सिन्धवः । यत्प्रेपिता वरुणेन ताश्शीभ-समवल्गत । तदाप्नो-दिन्द्रो वो यतीस्तास्मा दापो अनुस्थन । अपकामस्स्यन्दमाना अवी-वरत वो हिकम् । इन्द्रो वश्शक्तिभिर्देवी स्तस्मा द्वार्णामवो हितम् । एको देवो अप्यतिष्ठस्स्यन्दमाना यथावशम् । उदानिषुर्महीरिति तस्मादुदकमुच्यते । आपो भद्रा घृतमिदाप आसुरग्नी षोमौ बिभ्रत्याप इत्ताः । तीव्रो रसो मधुपृचाम् । अरङ्गम आमा प्राणेन सह वर्चसागन । आदित्पश्याम्युतवा शृणोम्यामा घोषो गच्छति वाङ्ग आसाम् । मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपय्यंदावः । आपोहिष्ठा मयो भुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे । यो वश्शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव मातरः । तस्मा

अरङ्गमामवो यस्य स्वयाय जिन्वथ। आपो जनयथाचनः। दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या संभवब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा ॥

पवमानस्सुवर्जनः। पवित्रेण विचर्षणि। य पोता स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः। जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वा क्रतूग्ं रनु। यत्ते पवित्रमर्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे। उभाभ्यां देवसवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे॥ वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयग्ं स्याम पतयो रयीणाम्। वैश्वानरो रश्मिभि-र्मा पुनातु। वातः प्राणेनेषिरो मयो भूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीताम्॥ बृहद्भिः सवितस्तृभिः। वर्षिष्ठै-र्देवमन्मभिः। अग्ने दक्षैः पुनाहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा। इदं ब्रह्म पुनीमहे। यः पावमानीरध्येति। ऋषिभि-स्सम्भृतग्ं रसम्। सर्वग्ं स पूतमश्नाति। स्वदितं मातरिश्वना। पावमानीर्यो अध्येति। ऋषिभि-

स्समृतगू रसम । तस्मै सरस्वती दुहे । क्षीरꣳ सर्पि-र्मधूदकम् ॥

पावमानीस्स्वस्त्ययनी । सुदुघाहि पयस्वती । ऋषिभिस्सम्भृतो रसः ।

ब्राह्मणेष्वमृतगूं हितम् ॥ पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् ।

कामान् समर्धयन्तु नः । देवी-र्देवै समाभृताः । पावमानीस्स्वस्त्ययनी ।

सुदुघाहि घृतश्चुतः । ऋषिभि सम्भृतो रसः । ब्राह्मणेष्वमृतगूं हितम् ।

येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन सहस्रधारेण ।

पावमान्यः पुनन्तु मा । प्राजापत्यं पवित्रम् । शतोद्यामगूं हिरण्मयम् ।

तेन ब्रह्म विदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रस्सुनीती सहमा पुनातु ।

सोमस्स्वस्त्या वरुणस्समीच्या । यमो राजा प्रमृणाभिः पुनातु मा ।

जातवेदा मोर्जयन्त्या पुनातु ।

6. 'उदुत्तम'मित्यादि षडृचम्—

उदुत्तमव्वरुणपाशमस्मदवाधमव्विमध्यमꣳ श्रथाय । अथावयमादित्य

व्रते तवानागसो अदितये स्याम । अस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत

वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य

व्रतानि । यत्किञ्चेदव्वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती

यत्तव धर्मायुयोऽपिममानस्तस्मादेनसो देवरीरिषः । कितवासो यद्रिरिपुर्नदीवि यद्वाघासत्यमुत यन्न विद्म । सर्वाताविष्य शिथिरेव देवाथाते स्याम वरुण प्रियासः । अवते हेडो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेतो राजन्नेनांसि शिश्रथः कृतानि । तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः ॥

7. **रुद्रसूक्तं 'परिणोरुद्रस्ये'ति षड्चम्—**

परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्वमीढ्वस्तोकाय तनयाय मृडय ॥1॥ स्तुहिश्रुतङ्गर्तसदंयुवानं मृगन्न भीममुपहन्तुमुग्रम् । मृडाजरित्रे रुद्रस्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः ॥ 2 ॥ मीढुष्टमशिवतमशिवोनस्सुमना भव । परमे वृक्ष आयुधन्निधाय कृत्तिंवसान आचर पिनाक बिभ्रदागहि ॥ 3 ॥ अर्हन्बिभर्षि सायकानि धन्व । अर्हन्निष्कय्यजतंविश्वरूपम् । अर्हन्निदन्दयसे विश्वमब्भुवम् । नवा ओजीयो रुद्रत्वदस्ति ॥ 4 ॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वंशर्द्धो मारुतं पृक्ष ईशिषे । त्वं वातै-

रुणैर्यासि शङ्क्रयस्त्व पूषा विधतः पामि नुत्मना ॥ 5 ॥ आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्यो । अग्नि पुरा तनयित्नो रचित्ताद्धिरण्यरूप मवसे कृणुध्वम् ॥ 6 ॥

(8) **ब्रह्मसूक्तं, 'ब्रह्मजज्ञानमि'ति--**

(ब्रह्मसूक्तम्)

ब्रह्मजज्ञानं प्रथमं पुरस्तात । विसीमतस्सुरुचो वेन आवः । सबुध्निया उपमा अस्य विष्ठाः । सतश्च योनिमसतश्च विव ॥ पिता विराजा मृषभो रयीणाम् । अन्तरिक्षं विश्वरूप आविवेश । तमर्के-रभ्यर्चन्ति वत्सम् । ब्रह्मसन्त ब्रह्मणा वर्धयन्त. ॥ ब्रह्म देवानजनयत् । ब्रह्म विश्वमिदञ्जगत् । ब्रह्मणः क्षत्रन्निर्मितम् । ब्रह्म ब्राह्मण आत्मना । अन्तरस्मिन्निमे लोका. । अन्तर्विश्वमिदञ्जगत । ब्रह्मैव भूतानाञ्ज्येष्ठम् । तेन कोऽर्हति स्पर्धितुम् ॥ ब्रह्मन्देवास्त्रयस्त्रिंशत । ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन् ह विश्वा भूतानि । नावीवान्तस्समाहिता ॥ चतस्र आशा. प्रचरन्त्वग्नयः । इमन्नो यज्ञन्नयतु प्रजानन् । घृतं पिन्वन्नजरं सुवीरम् । ब्रह्मसमिद्भवत्याहुतीनाम् ॥

(9) विष्णुसूक्त 'विष्णोर्नुकं' इत्यादिषड्चम्—

विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांगुंसि यो अस्कभायदुत्तरगुं सधस्थं विचक्रमाणस्त्रेधोरुगायः। तदस्य प्रियमभि-पाथो अश्याम्। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था। विष्णो पदे परमे मध्व उत्सः। प्रतद्विष्णुस्तवते वीर्याय। मृगो न भीम कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु। अधिक्षियन्ति भुवनानि विश्वा। परो मात्रया तनुवा वृधान। न ते महित्वमन्वश्नुवन्ति। उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वम्। परमस्य विथ्से। विचक्रमे पृथिवीमेष एताम्। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षितिगुं सुजनिमाचकार। त्रिर्देवः पृथिवीमेष एताम्। विचक्रमे शतर्चसं महित्वा। प्रविष्णुरस्तु तवसस्तवीयान्। त्वेषगुंह्यस्य स्थविरस्य नाम॥

(10) 'पञ्चदुर्गाः जातवेदस' इत्यादि पञ्चर्चम्—

(दुर्गासूक्तम्)

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः। स नः

पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरितात्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीꣳशरणमहं प्रपद्ये सुतरसितरसे नमः ॥ अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुन्न नावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सधस्थात्। स नः पर्षदतिदुर्गाणि विश्वाक्षामद्देवो अति दुरितात्यग्निः ॥

## (11) श्रीसूक्तं 'हिरण्यवर्णामि'ति पञ्चदशर्चम्—

(श्रीसूक्तम्)

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ अश्वपूर्वां रथमध्यां हस्तिनाद-प्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां

पद्मवर्णां तामिहोपह्वये श्रियम् ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीग्ं सर्वभूतानां तामिहोपह्वये श्रियम् । मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ कर्दमेन प्रजाभूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरग्ं श्रियं वासय मे कुले । आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रां यः करिणीं यष्टिं

पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं

गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥

(12) 'नमो ब्रह्मण' इति परिधानीयां त्रिरन्वाहेति—

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नमः ओषधीभ्यः ।

नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥

ब्रह्माणं प्रणवेनोत्थाप्य, वरुणं मनसोद्वास्य, (1)सुरभिमत्याब्लिङ्गाभिः प्रतिसरसूत्रं कर्तारं च प्रोक्ष्य, प्रतिसरसूत्रमादाय, हस्तं, अङ्गुष्ठानामिकाभ्यां गृहीत्वा, भस्मना त्रिरूर्ध्वमुन्मृज्य, (2)'त्र्यम्बकेन' मन्त्रेण कर्ता तण्डुलैरञ्जलिं पूरयित्वा, तदुपरि फलं निधाय, तदुपरि सूत्रं च निधाय,

1. सुरभिमती, अब्लिङ्गाश्च मन्त्राः 7-पृष्ठे द्रष्टव्याः ।

2. त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

(1)'अग्निरायुष्मानि'ति पञ्चभिराचार्यो हस्तं गृहीत्वा, अभिमन्त्र्य, द्विजैरनुज्ञातः कर्तुरुत्तान दक्षिणे हस्ते (2)'बृहत्सामे'ति निवीती बध्वा, स्त्रीणा हस्ते भस्मना (3)घृतसूक्तेन रक्षा कुर्यात् । ब्राह्मणेभ्यो दक्षिणा दद्यात् । आचार्याय विशेषतः । आधानचातुर्मास्येषु, पशुसोमेषु द्वयोर्दम्पत्योः कौतुकं कुर्यात् । आदौ आग्रयणादिषु—

1. अग्निरायुष्मान्थ्सवनस्पतिभिरायुष्मान् तेन त्वायुषाऽऽयुष्मन्तं करोमि । सोम आयुष्मान्थ्स ओषधीभि रायुष्मान्तेन त्वायुषायुष्मन्तं करोमि । यज्ञ आयुष्मान्थ्स दक्षिणाभिरायुष्मान्तेन त्वायुषायुष्मन्तं करोमि । ब्रह्मायुष्मत्तद्ब्राह्मणै रायुष्मत्तेन त्वायुषायुष्मन्तं करोमि । देवा आयुष्मन्तस्ते मृतेनायुष्मन्तस्तेन त्वायुषायुष्मन्त करोमि ॥

2. बृहथ्साम क्षत्रभृद्वृद्ध वृष्णिय त्रिष्टुभौजश्शुभितमुग्र वीरम् । इन्द्र स्तोमेन पञ्चदशेन मध्यमिद वातेन सगरेण रक्ष ॥

(घृतसूक्तम्)

3. यो ब्रह्मा ब्रह्मण उज्जहार प्राणैः शिरः कृत्तिवासाः पिनाकी । ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ॥ १ ॥

विभ्राजमानः सरिरस्य मध्या-द्रोचमानो घर्मरुचिर्य आगात् । स मृत्युपाशानपनुद्य घोरानिहायुषेणो घृतमस्तु देवः ॥ ॥ २ ॥

तत्तत्कर्मसमाप्तौ तु व्याहर्ताभस्तु कौतुकम् ।
त्यक्त्वा नदीतटाकादौ त्यजेदाचार्यसत्तमः ॥

## ॥ अथ उदकशान्तिविधिरुच्यते ॥

'श्रद्धा वा आपो' यज्ञो वा आपो वज्रो वा आपो अमृतमापः आपो वै रक्षोघ्नीः आपोवै देवाना प्रियंधाम आपोवै शान्ता इत्यादि शान्ति प्रशंसाः शान्ति काल जन्मनक्षत्रे विदाह चौलोपनयन समावर्तन सीमन्ताग्न्याधेयेषु, अन्यस्मिन् मङ्गलकार्ये ग्रहोपरागे ग्रहोत्पाते वा द्विपात्सु चतुष्पात्सु वा भय विन्देत्तदा शान्तिमारभते —

ब्रह्मज्योति-र्ब्रह्म-पत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम् । सुवर्णरंभ ग्रह-मर्कमर्च्य तमायुषे वर्धयामो घृतेन ॥ ॥ ३ ॥

श्रिय लक्ष्मी-मौबला-मंबिका गा षष्ठी च यामिन्द्रसेनेत्युदाहुः । ता विद्या ब्रह्मयोनि सरूपामिहायुषे तर्पयामो घृतेन ॥ ॥ ४ ॥

दाक्षायण्यः सर्वयोन्य. सुयोन्य सहस्रशो विश्वरूपाविरूपाः । ससूनवः सपतयः सयूथ्या आयुषेणो घृतमिदं जुषन्ताम् ॥ ॥ ५ ॥

दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथ्नन्तु वीरान् । तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाᳲ रीरिषो मोत वीरान् ॥ ॥ ६ ॥

एकः पुरस्ताद् य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनᳲ सापराये स नो हविर्घृत-मिहायुषेऽस्तु देवः ॥ ॥ ७ ॥

वसून् रुद्रा-नादित्यान् मरुतोऽथ साध्यान् ऋभून् यक्षान् गन्धर्वांश्च पितृंश्च विश्वान् । भृगून् सर्पांश्चागिरसोथ सर्वान् घृतं हुत्वा स्वायुष्या महयाम शश्वत् ॥

गजाश्वपशुशान्त्यर्थं ग्रहव्याधिविमुक्तये ।
पशुबन्धेषु यज्ञेषु चातुर्मास्ये च जन्मभे ॥

सीमन्ते च तथोत्पाते तोयशान्तिं पृथक् चरेत् ।
शान्त्यर्थं चेद्दिवा कुर्यात् रात्रौ चेत्कर्मसाद्गुणम् ॥

शुचौ देशे गोमयेन गोचर्ममात्रं चतुरश्रमुपलिप्य, चतुर्ब्राह्मणयुक्तः आचार्यः प्रक्षालितपाणिपादः, अप आचम्य, ब्राह्मणान् प्रतिदिशं दर्भेषूपवेश्य, आचार्यः प्राङ्मुखो दर्भेषूपविश्य, दर्भान् धारयमाणः, पवित्रपाणिः, प्रतिसरबन्धावधि कुर्यात् । तन्मध्ये कुम्भं निक्षिप्य, नद्यादितीर्थजलेन (1)अब्लिङ्गैः मन्त्रजलैरापूर्य, तिरः पवित्रं, अप आनीय, यज्ञपतिः 'तत्सवितुरि'ति चूतपल्लवाद्यैरलंकृत्य, आवाहनादि नैवेद्यान्तं प्रतिसरवत् कृत्वा, प्रागादिषु विप्रान्निमन्त्र्य, संपूज्य, कुम्भमन्वारभ्य जपेयुः । (2)'शन्नो देवीरभिष्टय' । सावित्रं 'तत्सवितुर्वरेण्यमि'त्येतं पच्छोऽर्धर्चशोऽनवानमुक्त्वा, वेदादीन् जपति । (3)'कृणुष्वपाज' इत्येतदनुवाकं,' 'मदेचिदस्ये'त्यर्धर्चम् । अप उद्धृत्य, 'इन्द्र वो विश्वतस्परी'त्येतमनुवाकं, 'यत इन्द्र', 'स्वस्तिदा' इति द्वे, 'महां', इन्द्रस्सजोषा' इति द्वे, 'ये देवाः पुरः सद' इति पञ्चभिः पर्यायैः, 'अग्नये रक्षोघ्न' इति पञ्च । 'अग्निरायुष्मानि'ति पञ्च । 'यावामिन्द्रा वरुणे'ति चतस्रः । 'यो वामिन्द्रावरुणावि'ति अष्टौ । 'अग्ने यशस्विन्नि'ति चतस्र. । 'ऋताषाडृतधामे'त्येतमनुवाकं दशभिः पर्यायैः । 'नमोऽस्तु सर्पेभ्य' इति चतस्रः । 'अयं पुरो हरिकेश' इति पञ्चभिः पर्यायैः । 'आशुश्शिशानो', 'श च मे' 'ममाग्ने', अग्नेर्मन्वे'

1. अब्लिङ्गा मन्त्राः 7-पृष्ठे द्रष्टव्याः ।

2. एतदादिमन्त्राः प्रतिसरबन्धविधौ द्रष्टव्याः ।

3. 'कृणुष्वपाज' इत्यादय उदकशान्तिमन्त्राः ग्रन्थान्तरे द्रष्टव्याः ।

इत्येताननुवाकान् । 'समीचीनामासी'ति षड्भिः पर्यायैः । 'हेतयो नाम स्थे'ति-षड्भिः पर्यायैः । 'शतायुधाये'ति पञ्च, 'भूतं भव्यं भविष्यदि'त्येतमनुवाकम् । 'इन्द्रो दधीच' इत्येतमनुवाकम् । 'चक्षुषो हेत' इति प्रतिपद्य, 'भ्रातृव्यं पादयामसी'त्यन्तं,'प्राणो रक्षति', सिंहे व्याघ्रे','अहमस्मि', 'ता सूर्याचन्द्रमसा,' 'अग्निः पातु', 'ऋध्यास्म हव्यैः, 'नवो नव' इति एताननुवाकान् । उत्तरै-रूपहोमैश्च सुरभिमत्याब्लिङ्गाभिः, हिरण्यवर्णाभिः, पवमानीभिः, व्याहृतीभिः, 'तच्छं यो रावृणीमह' इत्येतमनुवाकं, 'नमो ब्रह्मण' इति त्रिरन्वाह । प्रणवेन समाप्य, स्वराक्षरपदभ्रेषप्रायश्चित्तं 'आभर्गीभिः' उद्धारयेत् ॥

वरुणमुद्वास्य कर्तारं प्रोक्षयेयुः । व्याहृतीभिः, सुरभिमत्याब्लिङ्गाभिश्च 'देवस्य त्वे'ति पर्यायैश्च । अथ कर्ता स्नायात्, जलस्नानाशक्तं प्रोक्षयेत् आदर्शच्छायायामभिषिचेद्वा । अथ दक्षिणां ददाति । पुरस्तादुपविशते हिरण्यं ददाति । दक्षिणतः रजतम् । पश्चात् कुंभम् । उत्तरतो वासो ददाति । आचार्याय विशेषेण कुर्यात् । पिशाचेन ज्वरेण वा समाविष्टे एवं शान्ति एकरात्रं त्रिरात्रं पञ्चरात्रं सप्तरात्रं नवरात्रमिति व्याधिपापानुरूपं कुर्यात् । अपपुनर्मृत्युं जयति ।

यत्र वेदऋचामादिः प्रवृत्तिः पठ्यते तदा ।
जपकाले च पठ्यन्ते ऋचः सर्वाश्च सूरिभिः ॥

उदकशान्तिप्रतिसरयोः तन्त्रेण जपकर्म । तोयशान्ति प्रतिसरतन्त्रेण । शांतिद्वयोक्तमन्त्रांश्च तत्र तत्र जपेत् सह । 'शन्नो देवीः', सावित्र्यापि, 'कृणुष्व-पाजा'न्ते 'मदेचिदस्यार्धर्चजपान्तं समानम् । 'हिरण्यवर्णा' इति जपकाले तमनुवाकं जपेत् । अथ पवमानानन्तरं वरुणसूक्तादि श्रीसूक्तानन्तरं व्याहृतीश्च 'तच्छंयोरि'ति 'नमो ब्रह्मण' इत्यादि प्रथमं प्रतिसरसूत्रं, पश्चात् कर्तारं प्रोक्षयेत् ॥

तोयशान्तिजले स्नात्वा पापं हत्वा शुचिर्भवेत् ।
सिञ्चेदशक्तः छायायां कुशाग्रप्रोक्षणैः शुचिः ॥
तत्तज्जन्मनक्षत्रं तु जपकाले त्रिरुच्यते ।
सिंह इत्यनुवाकान्ते नामगोत्रं समुच्चरेत् ॥

'अपां यो द्रविणे रसः', 'तमहं', देवदत्तशर्मणे, कौशिकाय तेजसे ब्रह्मवर्चसाय गृह्णामि । एवं त्रिभिः तत्तज्जन्मनक्षत्रजपकाले त्रिः पठेत् । 'उपहोममन्त्राश्चे'ति केचित् । कुंभपूरणकाले सावित्र्या व्याहृतीभिश्च पूरणं एवं कुर्यात् ॥

## ॥ अथ अङ्कुरार्पणमुच्यते ॥

निर्दिष्टदिवसात् पूर्वं युग्मेऽहन्यङ्कुरार्पणम् ।
प्रदोषे वाथ सायाह्ने गुणाधिक्ये समाचरेत् ॥
चौलोपनयने स्नाने दम्पत्योश्च विवाहके ।
अग्न्याधाने च सोमे च कुर्यादङ्कुरवापनम् ॥

उत्सवात्पूर्वं नवमे सप्तमे पञ्चमे तृतीये वा सायाह्ने वा प्रदोषे वा कुर्यात् । यद्वा, 'सद्यो वाङ्कुरवापनमि'ति न्यायेन सद्यःकालपक्षे अङ्कुरं कृत्वा, प्रतिसरकार्यम् । आचार्यकार्यमदम् । अथ शुचौ देशे कर्माङ्गमिति संकल्प्य, 'ब्रह्मादयः प्रीयन्तामि'ति पुण्याहम् ॥

अथ पञ्चपालिका सौवर्णं रजतताम्रमृण्मयं वा यथासंभवं गृह्णाति ।

वल्मीकमृत्तिका मृच्छगोमयं तथैव च ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम् ॥

दूर्वामश्वत्थपत्रं च शिरीषं बिल्वपत्रकम् ।
तासां मूले तु बध्नीयात् श्वेतसूत्रेण वेष्टयेत् ॥

पालिकाः परिस्तीर्य, उत्तरत पालिकाद्रव्यम मादयित्वा,

देवताः मपवित्रासु क्रमेणावाहयेत्ततः ।

मध्ये, ओंभू ब्रह्माणमावाहयामि । ओ भुवः प्रजापतिमावाहयामि । ओं सुवः चतुर्मुखमावाहयामि । ओं भूर्भुवस्सुवः स्वाहा हिरण्यगर्भमावाहयामि । इत्यावाह्य, ब्रह्मादीना इदमासनम् । पूर्वे, ओं भूः इन्द्रमावाहयामि । ओं भुवः वज्रिणमावाहयामि । ओं सुव शतक्रतुमावाहयामि । ओंभूर्भुवस्सुवः शचीपति मावाहयामि । इन्द्रादीनामिदमासनम् ।

दक्षिणे, ओं भूः धर्ममावाहयामि । ओं भुवः वैवस्वतमावाहयामि । ओं सुवः पितृपतिमावाहयामि । ओं भूर्भुवस्सुवः धर्ममावाहयामि । यमादीना-मिदमासनम् ।

पश्चिमे, ओं भूः वरुणमावाहयामि । ओं भुवः प्रचेतसमावाहयामि । ओं सुवः स्वरूपिणमावाहयामि । ओं भूर्भुवस्सुवः अपांपतिमावाहयामि । वरुणादीनामिदमासनम् ।

उत्तरे, ओं भूः सोममावाहयामि । ओं भुवः शशिनमावाहयामि । ओं सुव इन्दुमावाहयामि । ओं भूर्भुवस्सुवः निशाकरमावाहयामि । सोमादीनामिदमासनम् । ब्रह्मादिभ्यो नम इदं पाद्य, उदमाचमनीयम् । इदमर्घ्यमित्यादि । देवताः स्नापयति । 'आपोहि ष्ठा मयो भुव' इति तिसृभिः, 'हिरण्य वर्णा' इति चतसृभिः, 'पवमानः सुवर्जन' इति एतेनानुवाकेन मार्जयित्वा, ब्रह्मादिभ्यो नमः वस्त्रयज्ञोपवीत–उत्तरीयाभरणार्थे इमे अक्षताः, इत्यक्षतैः क्रमेणार्चयति । ब्रह्मादिभ्यो नमः, एते गन्धाक्षतपुष्पधूपदीपादयः सर्वालङ्काराः सर्वोपचाराः' इति गन्धादिभिरभ्यर्च्य निवेदयेत् । ओं भूर्भुवस्सुवः'

सत्यं त्वर्तेन परिषिञ्चामि, 'देवस्य त्वा', 'ब्रह्मादिभ्यो नमः, इन्द्रादिभ्यो नमः, यमादिभ्यो नमः, वरुणादिभ्यो नमः, सोमादिभ्यो नमः' गुलं फलं वा यथा भागं निवेदयामि । आचमनीय समर्पयामि । ताम्बूलं समर्पयामि ।

व्रीहियवतिलमुद्गसर्षपान् मिश्रीकृत्य, यवाभावे माषान्वा । ततः दूर्वाङ्कुररूपान् क्षीरेण प्रक्षाल्य सक्षीरमोषधिद्रव्यं सकूर्चमादाय, उत्थाय दिक्पालान् उपतिष्ठते ।

दिशापतीन्नमस्यामि सर्वकालफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥

अथोपविश्य, सकूर्चेन क्रमेणाङ्कुरान् वापयति । मध्ये 'ब्रह्मजज्ञानं' 'पिता विराजे'ति द्वाभ्याम् ।

1. ब्रह्मजज्ञान प्रथमं पुरस्ताद्विसीमत स्सुरुचो वेन आवः ।
सबुध्निया उपमा अस्य विष्ठास्सतश्च योनि मसतश्च विवः ॥

2. पिता विराजा मृषभोरयीणामन्तरिक्ष विश्वरूप आविवेश ।
तमर्कैरभ्यर्चन्ति वत्स ब्रह्मसन्त ब्रह्मणा वर्धयन्तः ॥

ब्रह्मादिभ्यो नमः । अयं बीजावापः । सकृन्मन्त्रेण सकृत्तूष्णीम् । एवं सर्वत्र । प्राच्या 'यत इन्द्र भयामहे' 'स्वस्तिदा विशस्पतिरि'ति द्वाभ्याम् ॥

1. यत इन्द्र भयामहे ततो नो अभयङकृधि । मघवञ्छग्धि
तव तन्न ऊतये विद्विषो विमृधो जहि ।

2. स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ॥

दक्षिणतः, 'योस्य कौष्ठ्य' 'यमङ्गाय भङ्गयश्रव,' इति द्वाभ्याम् ।

1. योस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्गयश्रवो गायथो राजा न परोध्य. ।

2 यमङ्गायभङ्गयश्रवो यो राजानपरोध्य. । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा ॥

प्रतीच्या, 'इमं मे वरुण', 'तत्त्वायामि' इति द्वाभ्याम् ।

1. इमं मे वरुण+त्वामवस्युराचके ।

2. तत्त्वायामि+आयुः प्रमोषीः ॥

उत्तरत., 'सोमो धेनुं' 'आप्यायस्वे'ति द्वाभ्याम् ।

1. सोमो धेनु-सोमो अर्वन्तमाशु-सोमो वीरं कर्मण्य ददातु । सादन्य विदथ्य-सभेयं पितुश्श्रवणं यो ददाशदस्मै ।

2. आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥

यथाक्रमम् वापयेत् । अत्र कारिका––

सुमङ्गल्योऽथवा कन्यास्तिस्रः पञ्चापि सप्त वा ।
अवन्ध्या निर्वपेयुस्ताः रोगनष्टविवर्जिताः ॥

एताः स्त्रियश्च संपूज्य पालिकासु यथाक्रमम् ।
सिकताभिश्च शुद्धाभिः प्रच्छाद्य रक्षयेऽर्थिता ॥

मूषिकादेस्तु बाधार्थं पञ्चमे वाथ सप्तमे ।
यात्वकर्म समाप्तिः स्यात् अयुग्मान् हि विसर्जयेत् ॥

नैवेद्यं प्रत्यहं कुर्यात् देवांस्त्वन्ते विसर्जयेत् ।

आवाहनमुद्वासन च व्याहृतीसहितं कुर्यात् । अङ्कुरं नद्याः तटाके वा पञ्चमे सप्तमे नवमेऽह्नि विवाहयज्ञादीना समाप्तौ विसर्जयेत् ॥

## ॥ अथ ऋतुसंवेशनादि ॥

जन्मादि वा कुमारः क्रियाभिः लुप्तः स्यात् । उपनयनकाले ततः पूर्वतन्त्रेण यदि कुर्यात् । यद्वा सीमन्तकाले ततः पूर्वं तन्त्रेण यदि कुर्यात् । प्राशने वा चौले वा ततः पूर्वमन्त्रेण यदि कुर्यात् । तासा क्रियाणां पृथक्करणम् । अस्मिन् पक्षे तन्त्रप्रायश्चित्त कुर्यात् । यद्येकहोमे तन्त्रेण यदि कुर्यात्, प्रधानादौ द्वे द्वे मिन्दाहुतीः, जयानभ्याधानान् रुद्राहुत्यन्तं हुत्वा, पश्चात् प्रधानहोम एव । इति तन्त्रप्रायश्चित्तम् ।

अथ कालातिक्रमप्रायश्चित्तम्––

गर्भाधानादीनि कर्माणि तत्तत्काले अकृतानि कालान्तरे कृतानि चेत् प्रधानादौ, 'ततम्म आपो': 'यत्पाकत्रा, 'मनो ज्योतिः', 'मिन्दाहुती', महाव्याहृती, व्याहृतीश्च प्रायश्चित्तं कुर्यात् ।

1. तन्म आपस्तदुतायते पुनः। स्वादिष्ठाधीति रुचथाय शस्यते। अयꣳसमुद्र उत विश्वभेषजः। स्वाहाकृतस्य समुतृप्णुतर्भुव-स्स्वाहा ॥ ऋभुभ्य इदम्।

2. यत्पाकत्रा मनसा दीनदक्षा न। यज्ञस्य मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्। यजिष्ठो देवाꣳऋतुशो यजाति स्वाहा। अग्नय इदम्।

3. मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु। या इष्टा उषसो निम्रुचश्च तास्सन्दधामि हविषा घृतेन स्वाहा। मनसे ज्योतिष इदम्।

4. यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणि-स्स्वाहा। अग्नये जातवेदसे विचर्षणायेदम्।

5. पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः। पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योस्स्वाहा। अग्नीन्द्रबृहस्पत्यश्विभ्य इदम्।

6. भूरग्नये च पृथिव्यै च महते च स्वाहा। अग्नये पृथिव्यै महत इदम्।

7. भुवो वायवे चान्तरिक्षाय च महते च स्वाहा। वायवेऽन्तरिक्षाय महत इदम्।

8. सुवरादित्याय च दिवे च महते च स्वाहा। आदित्याय दिवे महत इदम्।

9. भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा। चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम्।

10 भूस्स्वाहा। अग्नय इदम्।

11. भुवस्स्वाहा। वायव इदम्।

12. सुवस्स्वाहा। सूर्यायेदम्।

13. ओ भूर्भुवस्सुवस्स्वाहा। प्रजापतय इदम्।

युगं नवपदं पदाष्टकमिति केचित्।
प्रथमेऽहनि चण्डाली द्वितीये सूतिका भवेत्॥

तृतीयेऽह्नि स्वधर्मस्था चतुर्थे पतितोक्तवत्।
चतुर्थे दिवसे स्नायात् पूर्वं पतितवत् स्थिता॥

मृते च सूतकान्ते च संगमे स्नानमाचरेत्।
मङ्गवात्परतः स्नानं आर्तवाना विशिष्यते॥

मृदा प्रलिप्य सुस्नायात् एकविंशतिधा शुचिः।
शिर आरभ्य सर्वाङ्गं पश्चात्स्नानशतं चरेत्॥

स्नानान्ते भास्करं दृष्ट्वा सुपुत्रं प्रार्थयेत् सुधीः।
भर्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला॥

अथास्या आत्मानं प्रत्यभिमृशते। 'अहं गर्भम् दधाम्योषधीनां+अपरीषु पुत्रान्'।

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयन्पितॄणामहं जनिभ्यो अपरीषु पुत्रान्।

अथैनां उपैति। 'त्वां पूषञ्छिवतमामेरयस्व+प्रहरेम शेफम्'।

त्वां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति। या न ऊरू उशती विश्रयातैयस्यामुशन्तः प्रहरेम शेफम्।

चतुर्होतारं मनसानुद्रुत्य प्रणवेन रतिर्भवेत्।
ध्रुवमुत्पादिताः पुत्राः न लिप्यन्ते कदाचन।

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
पितरः तस्य तन्मासं तस्मिन् रजसि शेरते॥

असन्निधानविषये चतुर्थीप्रभृति आषोडशीमुत्तरामुत्तरां युग्मामुपैति। 'प्रजानिःश्रेयसमृतुगमनमि'त्याचार्याः। 'सर्वाणि ऋतुगमनानि मन्त्रवन्ति भवन्ति' इति बोधायनः। 'यच्चादौ यच्चर्ताविति शालाकिः॥

## ॥ अथ गर्भाधानम् ॥

तत्तत्कालकरणपक्षे पूर्वेद्यु. नान्दीमुखं प्रतिसरं च कृत्वा, तस्मिन् दिने शोभनमुहूर्ते कर्म कुर्यात्। 'ब्रह्मादयः प्रीयन्तां' इति पुण्याहम्। अथोल्लेखन-प्रभृत्याग्निमुखात्कृत्वा, पक्वाज्जुहोति, 'प्रवेधसे कवये मेध्याय+हेडयो प्रवेधसे हेडथान् स्वाहा।

प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्तु । अव देवान् यजे हेड्यो । प्रवेधसे + हेडयान्त्स्वाहा । प्रवेधस इदम् ।

स्विष्टकृतमादाय, अन्तः परिधि मादायित्वा, आज्याहुतीरुपजुहोति—'ज्येष्ठाय स्वाहे'ति द्वादशभिः ।

(1) ज्येष्ठाय स्वाहा । ज्येष्ठायेदम् (2) श्रेष्ठाय स्वाहा । श्रेष्ठायेदम् । (3) कनिष्ठाय स्वाहा । कनिष्ठायेदम् । (4) कनिष्ठित्यै स्वाहा । कनिष्ठित्या इदम् । (5) प्रतिष्ठाय स्वाहा । प्रतिष्ठायेदम् । (6) प्रतिष्ठित्यै स्वाहा । प्रतिष्ठित्या इदम् । (7) दम्पत्यै स्वाहा । दम्पत्या इदम् । (8) दम्पतये स्वाहा । दम्पतय इदम् । (9) अयने स्वाहा । अयन इदम् । (10) अयनपतये स्वाहा । अयनपतय इदम् । (11) प्रजापतये स्वाहा । प्रजापतय इदम् । (12) ब्रह्मणे स्वाहा । ब्रह्मण इदम् ।

'हव्यवाहमि'ति *स्विष्टकृदादि जयादिप्रायश्चित्तादि कृत्वा, मन्त्रार्थं जुहोति । ब्रह्मोद्वासनं, प्रणीताभ्यो दिशोऽभ्युन्नीय, आत्मानं पत्नीं च प्रोक्ष्य, हविष्यमन्नमभिमन्त्रयते । 'तत्सवितुर्वृणीमह' इति ।

* स्विष्टकृदादि जयादिप्रायश्चित्तादिमन्त्राः 20—तमपृष्ठादारभ्य द्रष्टव्याः ।

तथ्सवितुर्वृणीमहे वय देवस्य भोजनम् । श्रेष्ठ सर्वधातममं तुर भगस्य धीमहि । ओम् ।

अपरेणाग्निमुभौ जायापती प्राश्नीयाताम् । 'तत्सवितुः वरेण्यमि'ति प्राश्य, अप आचम्य, जठरमभिमृशति *'यत इन्द्र भयामहे' 'स्वस्तिदा विशस्पति.' इति द्वाभ्याम् । यं कामं कामयते तं मनसा ध्यायेत् ॥

## ॥ अथ पुंसवनम् ॥

विज्ञाते गर्भे ज्योतिश्शास्त्रतः, तृतीये मासि वा, पूर्वेद्युः नान्दीमुखं प्रतिसरं च कृत्वा, श्वोभूते स्नानादि चतुष्टयं कृत्वा, प्रजापतिः प्रीयतामिति पुण्याहम् । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा, पक्वाज्जुहोति । 'प्रजापते तन्वं मे जुषस्व+स्यामो । प्रजापते+स्याम स्वाहा ।

प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिस्सहसा म इन्द्र । विश्वैर्देवैरा-तिभिस्स रराणः पुग्ंमा बहूनां मातरस्यामो । प्रजापते तन्वं मे+ मातरस्याम स्वाहा । प्रजापतय इदम् ।

स्विष्टकृतमवदाय, अन्तः परिधि सादयित्वा । अथ आज्याहुतीरुपजुहोति । 'गर्भो अस्योषधीनां, तिसृभिरनुच्छन्दसं स्विष्टकृदाद्या परिषेचनं कृत्वा,

गर्भो अस्योषधीनाम् । गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि स्वाहा । अग्नय इदम् ।

* इमौ मन्त्रौ ३४-पृष्ठे द्रष्टव्यौ ।

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान्पुनरासद स्वाहा । अग्नये गर्भायेदम् ।

पुनरासद्यस दनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेन्तरस्याꣳ शिवतमस्स्वाहा । अग्नये गर्भायेदम् ।

अपरेणाग्निं नववस्त्रमाच्छादितामुपविष्टा पत्नी, मण्डलाकारं छायायाम् । अथ अस्या आज्यशेषं आस्ये प्रच्योतयति । तिष्ठन्निवीति प्राङ्मुखः 'अस्मे देवास' इति चतसृभिरनुष्टुच्छन्दसं स्रुवेण यावदुदरस्थं आज्यं भवति तावत्कर्तव्यम् ।

1. अस्मे देवासो वपुषे चिकित्सत यमाशिरादम्पती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ।

2. अशीर्दाया दम्पती वाम मश्नुता मरिष्टो रायस्स च ताꣳ समोकसा । य असिचꣳसन्दुग्ध कुम्भ्या सहेष्टन यामन्नमति जहातु सः ।

3. सर्पिग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य । सहजानिर्यस्सुमखस्य मान इन्द्राया शिरꣳसह कुम्भ्यादात् ।

4. आशीर्मे ऊर्जे मुत सुप्रजास्त्वमिषं दधातु द्रविणꣳसवर्चसम् । सञ्जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्याꣳअधरान्त्सपत्नान् ।

अथ परिषेचनादि समानम् । अथ प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनं ज्योतिश्शास्त्रोक्तकाले षष्ठे अष्टमे वा मासि आपूर्यमाणपक्षे, शोभनमुहूर्ते कुर्यात् । पुंसवन सीमन्त विष्णुबलि कर्मणि भार्या कर्त्री, अशक्तस्थाने पतिः ॥

एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन पादकृच्छ्रः प्रकीर्तितः ॥

केशान् मासत्रयादूर्ध्वं गर्भवान् धारयेद् द्विजः ।
यजनः पर्वणोः क्षौरं धारणं विहितादृते ॥

किंच --

केशान् मासत्रयादूर्ध्वं गर्भवान् धारयेद् द्विजः ।
अपि वा पञ्चमादूर्ध्वं गर्भे गर्भे च धारयेत् ॥

एतद्वचनेन प्रथमगर्भं विना द्वितीयादिगर्भेषु पञ्चममासानन्तरं उपाधि-रहिते सति क्षौरं न कर्तव्यम् । पुनश्च अन्यानि निषिद्धानि कार्याणि स्मृतिकारः वदति—

क्षौरं शवानुगमनं नखकृन्तनं च
श्राद्धान्नभोजनमिह त्विति दूरयानम् ।
उद्वाहमम्बुधिजलाप्लवनोपयोग-
मायुःक्षयं दिशति गर्भिणिकापतीनाम् ॥

**अन्ननिषेधः ॥**

चौलोपनयने चैव सीमन्ते ऋतुसङ्गमे ।
अन्नःशेषं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥

तस्मात् संकल्पात्पूर्वं, "अद्य ब्राह्मणभोजनार्थं तण्डुलसत्यादि द्रव्यं नानागोत्रेभ्यः ब्राह्मणेभ्यः तेभ्यस्तेभ्यः संप्रददे न मम" इति दत्वा, पश्चात् सङ्कल्पं कुर्यात् । गर्भाधानादि जातकर्मान्तं औपासने समस्ते कर्तव्यम् । द्विभार्याग्निसंसर्गेऽपि उभयोश्च सीमन्तादि औपासनं समस्ते कर्तव्यम् । अथ पूर्वेद्युः नान्दीमुखमुदकशान्तिं प्रतिसरं च कृत्वा, अपरेद्युः स्नानादिचतुष्टयं कृत्वा, संकल्प्य, 'धाता प्रीयतां' इति पुण्याहम् । पात्रसादनकाले त्रेण्या शलल्या दर्भैः उदुंबरप्रसूनैः मुष्टिना यवप्रसूनैश्च । तन्त्रपक्षे वस्त्रं च सादयेत् । परिधानप्रभृत्याग्निमुखान्तं कृत्वा, पक्वाज्जुहोति । 'धाता ददातु नो रयिं—वनोम्' । 'धाता प्रजाया' इति द्वाभ्याम् ।

अथ स्विष्टकृतमवदाय, अन्तः परिधि सादयित्वा । अथ आज्याहुतीरुपजुहोति 'धाता ददातु नो रयिं प्राचीमि'त्यान्तादनुवाकस्य द्वादशाहुतीः ।

धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनोम् ॥

2. धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान । धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम स्वाहा । धात्र इदम् ।

3. अनुनो द्यानुमति यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां दाशुषे मयस्स्वाहा । अनुमत्या इदम् ।

1. धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिꣳसत्यराधसस्स्वाहा । धात्र इदम ।

2. धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृतास्संव्ययन्ता विश्वे देवासो अदितिस्स जोषास्स्वाहा । धात्र इदम् ।

3. अनुनो द्यानुमति र्यज्ञं देवेषु मन्यताम् ।.अग्निश्च हव्यवाहनो भवतां दाशुषे मयस्स्वाहा । अनुमत्या इदम् ।

4. अन्विदनुमते त्वं मन्यासै शंच नः कृधि । क्रत्वे दक्षाय नो हिनु प्रण आयूꣳषि तारिषस्स्वाहा । अनुमत्या इदम् ।

5. अनुमन्यतामनुमन्यमाना प्रजावन्तꣳ रयमक्षीयमाणम् । तस्यै वयꣳ हेडसि मापि भूमसा नो देवी सुहवा शर्म यच्छतु स्वाहा । अनुमत्या इदम् ।

6. यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रतिभूषन्त्यायवः ।

**शोधनम् :** 88-पृष्ठे 'अथ स्विष्टकृते'त्यादि पंक्तिद्वयं 'अनुनो द्यानुमतेः' पूर्वं पठनीयम् । .

तत्र 'अनुनो द्यानुमति' रित्ययं मन्त्रः त्यक्तव्यः ।

यस्या उपस्थ उर्वन्तरिक्षगं सा नो देवी सुहवा शर्म यच्छतु स्वाहा।
अनुमत्या इदम्।

7. राकामहगं सुहवागं सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना। सीव्यत्वपस्सूच्याऽच्छिद्यमानया ददातु वीरगं शतदाय-मुक्थ्यग्ग् स्वाहा। राकाया इदम्।

8. यास्ते राके सुमतय स्सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपागहि सहस्रपोषगं सुभगे रराणा स्वाहा।
राकाया इदम्।

9. सिनीवालि पृथुष्टुकेया देवानामसि स्वसा। जुषस्व हव्यमाहुतं प्रजान्देवि दिदिड्ढिनस्स्वाहा। सिनीवाल्या इदम्।

10. या सु पाणिस्स्वङ्गुरि स्सुषूमा बहुसूवरी। तस्यै विश्पत्नियै हविस्सिनीवाल्यै जुहोतन स्वाहा। सिनीवाल्या इदम्।

11. कुहूमहगं सुभगा विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितृणा तस्यास्ते देवि हविषा विधेम स्वाहा। कुह्वा इदम्।

12. कुहूर्देवानाममृतस्य पत्नी हव्यानो अस्य हविषश्चिकेतु ।
सन्दाशुषे किरतु भूरिवामगं रायस्पोषं चिकितुषे दधातु स्वाहा ।
कुह्वा इदम् ।

स्विष्टकृदादि संस्रावान्तं कृत्वा, अपरेण अग्निं प्राङ्मुखीमुपक्रम्य, निवीती, त्रेण्या शलल्यादिमुष्टिना शिरोमध्ये केशान्विभज्य, भ्रूमध्यमारभ्य पिठरान्तं सीमन्त उन्नयति । *'राकामहं', 'यास्ते राके' इति द्वाभ्यां मुष्टि उत्तरतः त्यक्त्वा, अप उपस्पृश्य, तस्याः शिरसि यवप्रसूनान्याबध्नाति 'यवोऽसि+रातीः.' इति ।

यवोऽसि यवयास्मद् द्वेषो यवयारातीः ।

अथ वीणागायिनौ ब्राह्मणौ संशास्ति 'गायतामि'ति । तावेतां गाथां गायतः । 'सोम एव नो तीरेण कावेरि तव'—यस्याः नद्यास्तीरे वसेत् तस्या नाम गृह्णाति ।

सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीना-
स्तीरेण कावेरि तव ।

अथ परिषेचनादि समानम् ।

विदेशस्थो मृतो वापि भर्ता सीमन्तकालतः ।
पिता भ्राताऽथवा कुर्यात् श्वशुरो ज्येष्ठदेवरः ॥

* इमौ मन्त्रौ 90-पृष्ठे द्रष्टव्यौ ।

अत्र भ्राता ज्येष्ठ एव दैवादकृते सति प्रसूतायां जातकर्मादौ गर्भाधानप्रभृति क्रियमाणकर्मपर्यन्तं कालातिक्रमतन्त्रप्रायश्चित्तं कृत्वा, तन्त्रेण तत्तत्कर्म कर्तव्यम् ।

## ॥ अथ विष्णुबलिः ॥

अष्टमे मासि विष्णुबलिः । विष्णुर्हि गर्भस्य देवता । पूर्वपक्षस्य सप्तम्यां द्वादश्यां रोहिण्यां श्रोणायां वा पत्न्यनुकूलदिने कुर्यात् । पूर्वेद्युः नान्दीमुखं प्रतिसरं च कृत्वा, श्वोभूते स्नानादि चतुष्टयं कृत्वा, 'सविता प्रीयताम्'इति पुण्याहम् । अथ देवयजनोल्लेखनाद्यापरिधानात् कृत्वा, अग्रेणाग्निं विष्णुमावाहयति । तण्डुले पवित्रे 'ओ भूः पुरुषमावाहयामि' । ओं भुवः पुरुषं आवाहयामि । ओं सुवः पुरुषमावाहयामि । ओ भूर्भुवःसुवः पुरुषं आवाहयामि' । चतुर्भिः आसनादिमधुपर्कान्तं कृत्वा, परिधानप्रभृत्याग्निमुखान्तं कृत्वा, देवमर्चयति । 'आपो हि ष्ठा मयो भुव' इति तिसृभिः, 1'हिरण्यवर्णा' इति चतसृभिः, 'पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा । 'अथाद्भिस्तर्पयति' 'केशवं तर्पयामि' इत्यादि द्वादशनामभिः । अथ, गन्धाक्षत पुष्पधूपदीपैः 'महाविष्णवे नम' इत्यभ्यर्च्य । अथ सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदाय, अन्तःपरिधि सादयित्वा, अथाज्याहुतीरुपजुहोति । 2'विष्णोर्नुकं, 'तदस्य प्रियं,' 'प्रतद्विष्णु,' 'परो मात्रया,' 'विचक्रमे,' 'त्रिर्देवः' इति षड्भि. । स्विष्टकृदादिसंस्रावान्तं हुत्वा । अथ गुलपायसं, घृतमिश्रमन्न विष्णवे बलिमुपहरति । 3'देवस्यत्वा + भ्या,' केशवादिद्वादशनामभिः स्वाहान्तेन

1. एते मन्त्राः 8-पृष्ठे द्रष्टव्याः ।
2. विष्णुसूक्तमन्त्राः 67-पृष्ठे द्रष्टव्याः ।
3. देवस्यत्वेति मन्त्रः 14-पृष्ठे द्रष्टव्यः ।

पानीय-आचमन-ताम्बूलादि दत्वा, ऋग्यजुस्सामाथर्वभिः वैष्णवीभिः। यद्वा पुरुषसूक्तेन स्तुवन्ति। प्रदक्षिणनमस्काराशीर्वादान् कृत्वा, देवमुद्वासयेत्। 'ओं भूः पुरुषमुद्वासयामी'त्यादिभिः परिषेचनादि समाप्य, विष्णवे निवेदितं पायसं हविः पत्नीं प्राशयेत्।

विष्णवे गर्भरक्षार्थं ब्राह्मणान् द्वादशाशयेत्।
अन्नैर्वा पायसैर्वाऽपि पत्नीजन्मगृहागतैः॥

अष्टममासप्रभृति अहरहः पत्नी उष्णोदकेन स्नानादि कृत्वा, विष्णवे बलिं निवेद्य, निवेदितं भोजयेत्। पुमानस्यै जायत इति विज्ञायते। ब्राह्मणान् द्वादशनामभिरभ्यर्च्य भोजयेत्। अशक्तस्तु यथाशक्ति कुर्यात्। परेद्युः प्रतिसरं त्यक्त्वा अप्सु विसर्जयेत्।

## ॥ जातकर्म ॥

श्रुत्वा कुमारजननं सचेलस्नानमाचरेत्।
तत्कालदोषशान्त्यर्थं दद्यादायुर्विवृद्धये॥

दद्यात् बीजानि तत्काले वंशवृध्यै स्वशक्तितः।
दशदानानि दद्याच्चेदतीव शोभनं भवेत्॥

एवं दत्वा, तदानीं संकल्प्य, 'जातं कुमारं जातकर्मणा संस्करिष्ये मृत्युः प्रीयतामि'ति पुण्याहम्। अथ कुमारं अभिमन्त्रयते—'अद्भयः संभूते' नानुवाकेन।

अद्भ्यः संभूतः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे। वेदाहमेतं पुरुषं

महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥ तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवाना पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥

अथैनं स्नापयति। 'क्षेत्रियै त्वा निरृत्यै त्वे'ति षड्भिरनुच्छन्दसम्।

1. क्षेत्रियै त्वा निरृत्यै त्वा । द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि । शिवे ते द्यावापृथिवी उभे इमे ॥

2. शंते अग्निस्सहाद्भिरस्तु । शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षगं् सहवातेन ते । शन्ते चतस्रः प्रदिशो भवन्तु ॥

3. या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभिसूर्यो विचष्टे । तासां

त्वा जरस आदधामि। प्रयक्ष्म एतु निर्ऋति पराचैः ॥

4. अमोचियक्ष्माद्दुरितादवर्त्यै। द्रुहः पाशा न्निर्ऋत्यै चोदमोचि। अहा अवर्तिमविदथ्स्योनम्। अप्यभूद्भद्र सुकृतस्य लोके ॥

5. सूर्यमृत तमसो ग्राह्या यत्। देवा अमुञ्चन्नसृजन्व्येनसः। एवमहमिम क्षेत्रियाज्जामिशग् सात्। द्रुहो मुञ्चामि वरुणस्य पाशात्।

6. बृहस्पते युवमिन्द्रश्च वस्वः। दिव्यस्येशाथे उत पार्थिवस्य। धत्तग् रयिग् स्तुवते कीरयेचित्। यूयं पात स्वस्तिभिस्सदा नः ॥

अथैनं स्वोपस्थ आददाति। 'अङ्गादङ्गादि'ति।

अङ्गादङ्गाथ्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्र नामासि सजीव शरदश्शतम्।

अथैनं मूर्ध्न्यभिजिघ्रति। 'अश्मा भव परशुर्भव+जिघ्रामि'।

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। पशूनान्त्वा हिङ्कारेणाभि-जिघ्रामि।

आश्वयुज, अप्रभरण, आपभरण इति। कृत्तिका इति, कार्तिक इति वा। रौहिण, मार्गशीर्ष, आर्द्रा, पुनर्वसो, तिष्य, आश्लेष, माघ, पूर्वफाल्गुन,

उत्तरफाल्गुन, हस्त, चैत्र, स्वाते, विशाख, अनुराध, ज्यैष्ठय, मूलक, पूर्वाषाढ, उत्तराषाढ, श्रावण, श्रविष्ठ, शातभिषज, पूर्वप्रोष्ठपद, उत्तरप्रोष्ठपद, पाद इति वा, उभयत्र प्रोष्ठपद इति वा, रैवत, एवं नक्षत्रनामधेयेन । अथ अस्य दक्षिणे कर्णे जपति, 'अग्निरायुष्मानि'ति पञ्चभिः पर्यायैः ।

*अग्निरायुष्मान्+आयुष्मन्तं करोमि ।

अथैनं दधिमधुघृतमिति समुदायुत्य हिरण्येन प्राशयति । प्राणो रक्षति, विश्वमेजत्' इत्येतेनानुवाकेन प्रत्यर्चं दशर्चम् । प्राणो रक्षति, यो देवो, मनस, 'आनये, जुषताम्', यया रूपाणि,' 'चक्षु', मानोहासी'च्छोण भद्रं' 'येन प्राच्या' दश ।

1. प्राणो रक्षति विश्वमेजत् । इर्यो भूत्वा बहुधा बहूनि । स इध्सर्वं व्यानशे ॥

2. यो देवो देवेषु विभूरन्तः । आवृदूदाक्षेत्रियध्वगदृषा । तमित्प्राणं मनसोपशिक्षत । अग्रन्देवानां मिदमस्तु नो हविः ॥

3. मनसश्चित्तेंदम् । भूतं भव्यंच गुप्यते । तद्धि देवेष्व-प्रियम् ॥

4. आन एतु पुरश्चरम् । सहदेवैरिमग्ं हवम् । मनश्श्रेयसि श्रेयसि । कर्मन् यज्ञपति दधत् ॥

* अयं मन्त्रः 71-पृष्ठे द्रष्टव्यः ।

5. जुषतां मेवागिदग्ं हवि. । विराड्देवी पुरोहिता । हव्यवा-
डनपायिनी ॥

6. यया रूपाणि बहुधा वदन्ति । पेशांसि देवाः परमे
जनित्रे । सानो विराडनपस्फुरन्ती । वाग्देवीजुषतामिद ँ हवि. ॥

7. चक्षुर्देवाना ज्योतिरमृते न्यक्तम् । अस्य विज्ञानाय बहुधा
निधीयते । तस्य सुम्नमशीमहि ॥

8. मानो हासीद्विचक्षणम् । आयुरिन्न· प्रतीर्यताम् । अनन्धाश्च-
क्षुषा वयम् । जीवा ज्योतिरशीमहि । सुवर्ज्योतिरुतामृतम् ॥

9 श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाच बहुधोद्य-
मानाम् । श्रोत्रेण मोदश्च महश्च श्रूयते । श्रोत्रेण सर्वा दिश
आशृणोमि ॥

10 येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशश्शृण्वन्त्युत्तरात् ।
तदिच्छ्रोत्र बहुधोद्यमानम् । अरान्ननेमि· परिसर्व बभूव ।

अतिशिष्टं गोष्पदे निनयति—'भूर्भुवस्सुवरि'ति । अथैनं मातुरुपस्थ आदधाति-'सीद त्वं मातुरस्या उपस्थ' इति चतसृभिः सहंसाभिः ।

1. सीद त्व मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनामर्चिषा मातपसाभिशशुचोऽन्तरस्यागं शुक्रज्योतिर्विभाहि ॥

2. अन्तरग्ने रुचा वपुख्यै सदने स्वे । तस्यास्त्वगं हरसा तपन्
जातवेदश्शिवो भव ॥

3. शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा
दिशः सर्वास्स्वां योनिमिहासदः ॥

4. हगंसश्शुचिपद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

अथ स्तनमभिमन्त्रयते—'यस्ते स्तन' इति ।

यस्ते स्तनश्शशयो यो मयो भूः । येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यस्सुदत्रः । सरस्वति तमिह धातवेकः ॥

धयन्तमनुमन्त्रयते—'द्यौस्ते पृष्ठमि'ति ।

द्यौस्ते पृष्ठगं रक्षतु वायुरूरू अश्विनौ च स्तनन्धयन्तगं सविता-
भिरक्षतु । आवाससः परिधानाद् बृहस्पति विश्वेदेवा अभिरक्षन्तु
पश्चात् ॥

अथास्योरसि उदकुम्भमुच्छिरसि निदधाति—'आपस्सुप्तेषु+ध्वमि'ति

आपस्सुप्तेषु जाग्रत रक्षांसि निरितोनुदध्वम् ।

अथ देवयजनोल्लेखनप्रभृति आग्निमुखात्कृत्वा, पक्वाज्जुहोति—'हरिं हरन्तं', 'माच्छिदो मृत्योमावधीरि'ति द्वाभ्याम् ।

1. हरिं हरन्तमनुयन्ति देवाः । विश्वस्येशान वृषभं मतीनाम् ।
ब्रह्मसरूप मनुमेदमागात् । अयनं मा विवधीर्विक्रमस्वोम् ।

2. माच्छिदो मृत्यो मावधीः । मा मे बलं विवृहोमाप्रमोषीः ।
प्रजां मा मे रीरिष आयुरुग्र । नृचक्षसन्त्वा हविषा विधेम स्वाहा ।
मृत्यव इदम् ॥

स्विष्टकृतमवदाय, अन्तः परिधि सादयित्वा, यथोक्तमाज्याहुतीः उपजुहोति—'सद्यश्चक्रमानाये'त्यन्तादनुवाकस्य चतुर्भिः ।

1. सद्यश्चक्रमानाय । प्रवेपमानाय मृत्यवे । प्रास्मा आशा
अशृण्वन् । कामेनाजनयन्पुनस्स्वाहा । मृत्यव इदम् ॥

2. कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः ।
यदमीषामदः प्रियम् । तदैतूपमामभि स्वाहा । मृत्यव इदम् ॥

3. परं मृत्यो अनुपरेहि पन्थाम् । यस्ते स्व इतरो देवयानात् ।

चक्षुष्मते शृण्वते ते ब्रवीमि । मानः प्रजा॰ रीरिषो मोतवीरान्थ्स्वाहा ।

मृत्यव इदम् ॥

4. प्रपूर्व्यं मनसा वन्दमानः । नाथमानो वृषभ चर्षणीनाम् ।

यः प्रजाना मेकर्माणानुपीणाम् । मृत्यु यजे प्रथमजा मृतस्य स्वाहा ।

मृत्यव इदम् ।

स्विष्टकृतादि संस्रावान्त कृत्वा, अथानोयुग रथयुग वा स्नाप्य, अच्छाद्य, अलङ्कृत्य, अग्रेणाग्निमुद्धृत्य, तस्याग्रेण अश्वत्थपर्णेषु हुतशेषं निदधाति । 'नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम.' इति परिषेचनादिसमानम् ।

अथ, अस्तमिते आदित्ये सूतिकागृहसमीपे लौकिकाग्निमुपसमाधाय, सपरिस्तीर्य, गौरसर्षपान् फलीकरणमिश्रान् पर्यग्निकरणं कृत्वा, अलङ्कृत्य, परिषिच्य, समिधमाधाय, अञ्जलिना जुहोति । 'कृणुष्व पाज' इत्येतेनानुवाकेन प्रत्यृचं अष्टादशर्चं भवति ।

1 कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवा॰ इभेन ।

तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः स्वाहा । अग्नये

रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

2. तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।

तपू॰ष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विष्वगुल्काः स्वाहा । अग्नये

रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्॥

3. प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्ध। यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीस्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्॥

4 उदग्ने तिष्ठ प्रत्याऽऽतनुष्व न्यमित्राँ ओषतात् तिग्महेते। यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कं स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्॥

5. ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूना जामिमजामि प्रमृणीहि शत्रून्स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्। स्वाहा। अग्नये रक्षोघ्न इदम्॥

6. स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभि द्यौत्स्वाहा।

अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

7. सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

8. अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरता मियं गीः । स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्थ्स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

9. इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवाꣳसमनु द्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाꣳ स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

10. यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्गुं जुजोषथ्स्वाहा ।

अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

11. महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्व नो अस्य वचमश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनास्स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

12. अस्वप्नजस्तरणय सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायव. सध्रियञ्चो निपद्याऽग्ने तव न. पान्त्वमूर स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

13. ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्ध दुरितादरक्षन् । ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह देभुस्स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

14. त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणी त्याश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्टुया कृणुह्यह्याण स्वाहा । अग्नये

रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

15. अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमान गृभाय । दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्या-
थ्स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

16. रक्षोहणं वाजिनमाऽऽजिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तꣳ स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

17. वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

18. उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ । मदे चिदस्य प्ररुजन्ति भामा न वरन्ते परिबाधो अदेवीस्स्वाहा । अग्नये

रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् । स्वाहा । अग्नये रक्षोघ्न इदम् ॥

अथोदनं तिलसक्तुभिः घृतेन समुदायुत्य, गोष्ठे अश्वत्थपर्णेषु 'अघोरायमघोराय नेजमेषाय नम' इति । अथातिशिष्टं सर्वा दिशः संप्रकिरन्ति । 'आवेशिनी+नम इति ।

आवेशिना व्यश्रुमुखी कुतूहलि न्येकस्तनी जृम्भिणी स्तम्भिनी मोहिनी च । कृष्णा विशाखा विमला ब्रह्मरात्री भ्रातृव्यसंख्येषु पतन्त्यमोघाः । ताभ्यो वै मातृभ्यो नमो नमः ।

एवमेव फलीकरणहोमं तत्प्रभृति सायं प्रातः दशरात्रं करोति । सायं उपक्रमः प्रातरपवर्गः । दशरात्रं सूतकाग्निं रक्षेत् । सूतकाग्नौ उद्वाते सति प्रायश्चित्तं उत्तरत्र वक्ष्यत इति ।

अथ दशमेऽहनि प्रातर्होमं कृत्वा, सूतकाग्नौ आज्यसंस्कारं कृत्वा, स्रुक्स्रुवसंमार्जनान्तं कृत्वा, युगमुत्थापयति । औपासनाग्नेः पुरस्तादुच्छ्रितं *'ब्रह्मजज्ञानं' इति । अथ उदककुम्भमुत्थापयति 'भूर्भुवस्सुवरोमि'ति ।

अथैनमप्सु विसर्जयति— 'समुद्र वः प्रहिणोमि+त्पयः' इति ।

समुद्रं वः प्रहिणोम्यक्षितास्स्वां योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥

* अयं 13-पृष्ठे द्रष्टव्यः ।

14

अथ पुनरेत्य सूतकाग्निमुपतिष्ठते—'बोधानो+अग्ने' इति।

बोधानो अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनुत्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने।

पुत्रप्रसूतिमुपतिष्ठते—'स बोधि+द्वेषांसी'ति।

स बोधि सूरिर्मघवा वसुदावा वसुपतिः। युयोध्यस्मद्द्वेषांसि।

अथ कुमारमुत्थापयति—'उत्तिष्ठ ब्रह्मणस्पते+सचे'ति।

उत्तिष्ठ ब्रह्मणस्पते। देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतस्सुदानवः। इन्द्रप्राशूर्भवा सचा।

कुमारमादायोपनिष्क्रम्य, आदित्यं उदीक्षयति—'उद्वयं तमसस्परि', 'उदुत्यं', 'चित्रं', 'तद्विष्णोः परमं पद' इति चतसृभिः।

पुत्रं मातृहस्ते दत्वा, सूतकाग्नौ आज्याहुतीर्जुहोति—'हिरण्यगर्भः समवर्तताग्र' इत्यष्टभिः।

1. हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीन्द्यामुतेमा कस्मै देवाय हविषा विधेम स्वाहा। ब्रह्मण इदम्।

2. यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य

ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम स्वाहा।

ब्रह्मण इदम् ॥

3. य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।

यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम स्वाहा।

ब्रह्मण इदम् ॥

4. यस्य मे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।

यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम स्वाहा।

ब्रह्मण इदम् ॥

5. य क्रन्दसी अवसातस्तभाने अभ्यैक्षेतान्मनसा रेजमाने।

यत्राधिसूर उदितौ व्येति कस्मै देवाय हविषा विधेम स्वाहा।

ब्रह्मण इदम् ॥

6. येन द्यौरुग्रा पृथिवी च दृढे येन सुवस्स्तभितं येन नाकः।

यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम स्वाहा।

ब्रह्मण इदम् ॥

7. आपोह यन्महती विश्वमायन्दक्षन्दधाना जनयन्तीरग्निम्।

ततो देवाना निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम स्वाहा ।

ब्रह्मण इदम् ॥

8. यश्चिदापो महिना पर्यपश्यद्दक्षन्दधाना जनयन्तीरग्निम् ।

यो देवेष्वेधि देव एक आसीत्कस्मै देवाय हविषा विधेम स्वाहा ।

ब्रह्मण इदम् ॥

अथ सूतकाग्निमुत्सृजति—'आयुर्दा अग्ने' इत्यृचा ।

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृत

पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् ।

अरण्योर्वा समारोपयते—'अयं ते योनिर्ऋत्विय' इति ।

अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तज्जानन्नग्न आरो-

हाथानो वर्धया रयिम् ।

अरणिं समारक्षितं कृत्वा, तमुपनयनकाले प्राप्ते मथित्वा तत्र होमः । अथ औपासनाग्निमुपतिष्ठते—'अग्न आयूंषि', 'अग्ने पवस्वे'ति द्वाभ्याम् ।

1. अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः । आरे बाधस्व

दुच्छुनाम् ।

2. अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधत्पोषं रयिम्मयि ।

'ज्योतिष्मत्या' पुत्रस्य नाम गृह्णाति—तामाशिषमाशासे, देवदत्त-नाम्ने ज्योतिष्मती तामाशिषमाशासे तन्तवे ज्योतिष्मतीम् ।

अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳसुगृहपतिर्मया त्व गृहपतिना भूयाश्शतꣳहिमास्तामाशिषमाशासे तन्तवे ज्योतिष्मती तामाशिषमाशासे कृत्तिकाय ज्योतिष्मतीम् ।

अथ कुमारं मूर्ध्न्यभिजिघ्रति—'अश्मा भव + जिघ्रामि' ।

अश्मा भव परशुर्भव हिरण्यमस्तृतं भम । पशूनान्त्वा हिङ्कारेणाभि-जिघ्रामि ।

'रौहिण' इत्यादि एनमभिमन्त्रयते—'अग्निरायुष्मान्' इति पञ्चभिः । पिता स्वयं वा प्रवासादेति । प्रवासादागतं पुत्र वा 'अग्निरायुष्मान्' इति पञ्चभि. अभिमन्त्रयते । दशमेऽहनि वपनं क्षौरं स्नानविधिः ।

जनने मरणे चैव वपनं दशमेऽहनि ।
अथ स्नानाधिकारी स्यात् आशौचं सर्वदा भवेत् ॥

मासर्क्षतिथिवाराणामनवेक्ष्याह गौतमः ।
दशाहे वपनं कुर्यात् शुध्यर्थं मृतसूतके ॥

आशौत्वान्न पूर्वेद्युः नापरेद्युः कथञ्चन ।
अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात् पुनः शुभे ॥

राष्ट्रक्षोभे नृपक्षोभे द्रव्याभावे च रोगिणि ।
सूतके मृतके चैव पश्चात् क्षौरं समाचरेत् ॥

द्वे पत्न्यौ गर्भिणीभूते एकपत्नी प्रसूतिका ।
वपन न तु कर्तव्यं नामकर्मादि कारयेत् ॥

स्वमातृपितृदीक्षाणा मध्ये भार्याप्रसूतिके ।
सूतके वपन कृत्वा पुनर्दीक्षां तथाब्दिकात् ॥

एव विचार्य कर्तव्य क्षौरस्नानं विधीयते ।
स्मरन् पुण्यानि तीर्थानि निमज्योन्मज्य चाप्लुत. ।

क्षौरस्नानविधिः—

क्षौरस्य मलमोक्षाय मृदालिप्याप्लुत' शुचिः ।
तुलसीमृत्तिकाभिश्च प्रलिप्यापादमस्तकम् ॥

आर्द्रवस्त्रं परित्यज्य शुष्कवस्त्रेण मार्जनम् ।
शवानुगमने क्षौरे पुनः स्नानं विधीयते ॥

स्मरन् पुण्यानि तीर्थानि निमज्योन्मज्य चाप्लुतः ।
मुहुर्मुहुस्ततः स्मृत्वा मनसा द्रुपदेति च ॥

अथ नित्यक्षौरे—

आवाह्य सर्वतीर्थानि यथावदघमर्षणम् ।
स्नायात् द्रुपदगायत्र्या यद्वा तत्र विशुध्यति ॥ इति स्नायात् ।

## ॥ कन्याक्रियाविधिः ॥

कन्यानां चैव जातादि कर्तव्यं कर्म मङ्गलम् ।
क्रियामय हि ब्राह्मण्य नाक्रियं ब्रह्म चोच्यते ॥

किञ्च--

पुत्राय च दुहित्रे च समाना ब्राह्मणी क्रिया ।
मन्त्रवद्गर्भ आजन्माद्याव्रत स्त्रियः ॥

'अनग्निरक्रियः शूद्र' इत्यादिवचनैः स्त्रियो ब्राह्मणस्य इत्युच्यते । तस्मात् गर्भादिविष्णुबलिकर्मान्तं तत्तत्काले कर्माणि यदि कुर्यात् मन्त्रवदेव गर्भाधानं पुंसवनं सीमन्त विष्णुबलि च पुंस इव होमादिक सर्वं कुर्यात् ।।

जन्मादि आव्रतं चौलान्त अमन्त्रकमेव । तथाहि--

स्त्रीणा चौलादि जन्मान्तं सर्वं कुर्यादमन्त्रकम् ।
पाणिग्रहणमारभ्य मन्त्रेण च पतिश्चरेत् ।।

गर्भादीनि तत्तत्काले अकृते सति तत्रापि जन्मादि अमन्त्रतः कर्तव्यमेव ।

तथाहि--

आद्यगर्भजकन्याना गर्भादि मन्त्रवच्चरेत् ।
कन्याना जातकर्मादि कुर्यादेव त्वमन्त्रकम् ।।

कन्याना होमकर्माणि लौकिकाग्नौ समाचरेत् ।
कौतुकाङ्कुरनान्द्यादि गृह्यज्ञममन्त्रवत् ।।

तत्तत्काले जातकर्मादीनि अकृते सति नान्दीमुखं कृत्वा, स्नानादि उच्छिरसि कुम्भनिधानान्तं सर्वं तूष्णीं समाचरेत् । एतावदेव स्त्रीणां जातकर्मादिकरणे नान्दीमुख सङ्कल्प पुण्याहं च कृत्वा, तत्तत्कर्म तूष्णी कुर्यात् । अथ प्रजासंस्कारार्थं औपासनादेकदेशग्रहणं करिष्य इति संकल्प्य, एकदेशं प्रणवेनाहृत्य भूर्भुवस्सुवरिति स्थण्डिले निधाय । द्वाभ्यामात्मन्यग्निं गृह्णाति–'मयि गृह्णाम्यग्रे अग्नि' 'योनो अग्निः पितर' इति ।

1. मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।
मयि प्रजां मयि वर्चो दधाम्यरिष्टा स्स्याम तनुवा सुवीराः ।

2. यो नो अग्निः पितरो हृत्स्वन्तर मर्त्यो मर्त्यॅ आविवेश।

तमात्मन्परि गृह्णीमहे वयं मासो अस्माॅ अवहाय परागात्।

स्रुक्स्रुवसमार्जनान्तं कृत्वा, चतुर्गृहीतेन पूर्णाहुति जुहोति। 'सप्त ते अग्न' इति।

सप्त ते अग्ने समिधस्सप्त जिह्वा. सप्तऋषयस्सप्तधाम प्रियाणि।

सप्तहोत्रास्सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन स्वाहा। अग्नये सप्तवत इदम्।

तदा औपासनाग्निः संपद्यते। प्रजासंस्कारकर्मणि समाप्ते, लौकिकः संपद्यते। तस्मिन् प्रजासंस्कार इति तथा कुर्वते।

उत्सृष्टसूतकाग्नौ वा जातकर्माकृते तदा।
औपासनैकदेशः स्यात् नामाद्युपनयक्रम.॥

प्रजासंस्कार उपनयनादयः। नामकरणोपनिष्क्रामणान्नप्राशनकर्णवेधन-चौलकर्माणि एकदेशे कुर्यात्।

**अथ नामकरणम्॥**

कुर्यातां नामकरणं द्वादशाहेऽथवा शुचौ।
दिने पुत्रस्य पितरौ आचार्यो वा तदाचरेत्॥

अथ पूर्वेद्युः नान्दीमुखं कृत्वा, श्वोभूते 'सविता प्रीयामि'ति पुण्याहं कृत्वा, औपासनाग्नौ विच्छिन्ने अग्निमाधाय, तत्र तु विभज्य, तत्र नामकर्म कुर्यात्। तमुत्सृजेत्। अथ देवयजनोल्लेखनप्रभृति आग्निमुखात्कृत्वा, 'भूर्भुवस्सुवरोमि'ति अनुद्रुत्य, सावित्र्या पक्वाज्जुहोति। स्विष्टकृतमवदाय,

अन्त.परिधि सादयित्वा । अथ आज्याहुतीः उपजुहोति । 'प्रजापते नत्वेतान्यन्य' इति षड्भि· 'हविर्न' इत्यन्तम् । स्विष्टकृत्प्रभृति संस्रावान्त कृत्वा, अग्रेणाग्निमश्वत्थपर्णेषु हुतशेष निदधाति । 'नम आव्याधिनीभ्य' इति । 'रोहिणस्यास्य कुमारस्य नाम धास्यावह' इति सकल्प्य, ब्राह्मणान् भोजयित्वा, आशिषो वदेत् । ओ भू क्रमेण, 'ओ स्वस्ति भवन्तो ब्रुवन्तु, ओ ऋद्धि भवन्तो वन्तु' । सकृदुक्त्वा, वाचयित्वा, उपविश्य, निवीती नामास्मै ददाति । द्व्यक्षरं, चतुरक्षर, अष्टाक्षर वा हकारवर्ज्योष्मविसर्जनीयप्रथमद्वितीयस्वराक्षरान्विना घोषाक्षरा· । घोषाक्षर आद्य, मध्येऽन्तस्थाक्षरं, अन्ते दीर्घविसर्जनीय वा कृदन्तं वा, न तद्धितान्तम् । अयुगक्षर चेत् 'सु' इत्युपसर्गमुच्चरेत् । 'सुगोविन्द,' 'सुकेशव' इत्यादिक वदेत् । ऋषीणा देवताना वा पूर्वपुरुषाणा वा नामधेयं कुर्यात् ॥

पित्रोर्भ्रातुर्गुरोर्नाम श्वश्रूश्वशुरयोस्तु वा ।
दद्यात् श्यालस्य पुत्राय मित्रस्य स्वामिनः स्वसुः ॥

एवमादीना नामधेय कुर्यात् । नदीपर्वतपैशाचनामानि पक्षिवृक्षयोः उक्तं विना न देयानि स्त्रीद्वयोः, स्त्रीपुसयोरपि । अयुगक्षर कुमार्यै युग्माक्षरं चेत् सुगौरी सुलक्ष्मीरिति वक्तव्यम् । दक्षिणे कर्णे वदेत् । 'अमुकनामासी'ति । एव स्त्रीणामेव नामधेय कृत्वा, मातृहस्ते दत्वा, अभ्युत्थाय उपवीती वदेत् । पुण्याह स्वस्तिमृद्धिमिति वाचयन् नामास्मै ददाति । 'रौहिणाय देवदत्तनाम्ने स्वस्ति भवन्तो ब्रुवन्तु' । एव रोहिण्यै पार्वतीनाम्न्यै स्वस्ति भवन्तो ब्रुवन्तु । तत्तन्नक्षत्रनामानुसारेण वदेत् । पुण्याहं होमशेषं समापयेत् । अभिवादयन् नामगुह्यमुपनयनात् पुरा मातापितरौ विद्याताम् । द्विनामा ब्राह्मणो वदेत् । नक्षत्रनामधेयस्य इदं द्वितीयनामधेयम् । तस्मात् 'द्विनामा ब्राह्मणोर्धुकः' इति श्रुतिः । सोमयाजी तृतीयं नामधेयं कुर्वीत सोमयाजीति । नामकरणोपनिष्क्रामणान्नप्राशनानि ब्राह्मणभोजनाद्वा पुण्याहाद्वा कुर्यात् ।

## उपनिष्क्रामणम् ॥

चतुर्थे मास्युपनिष्क्रामणम् । पूर्वेद्युः नान्दीमुखं कृत्वा, श्वोभूते स्नानादिचतुष्टयं कृत्वा, संकल्प्य, 'सविता प्रायताम्' इति पुण्याहं वाचयित्वा । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखान्त्कृत्वा, गायत्र्या पक्वं हुत्वा, स्विष्टकृतमवदाय अन्तः परिधि सादयित्वा । अथाज्याहुतीः उपजुहोति— 'स्वस्तिनो मिमीतामित्यष्टाभि. स्वस्तिसबाधेषु अभय नो अस्त्वि'त्यन्तम् ।

1. स्वस्ति नो मिमीतामश्विना भगस्स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नस्स्वस्ति द्यावापृथिवी सुचेतुना स्वाहा ।
अश्विभगादितिपूषाद्यावापृथिवीभ्य इदम् ॥

2. स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पति सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नस्स्वाहा ।
वायुसोमबृहस्पत्यादित्येभ्य इदम् ॥

3. विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निस्स्वस्तये ।
देवा अवन्त्वृभवस्स्वस्तये स्वस्ति नो रुद्रः पात्वंहसस्स्वाहा । विश्वेदेववैश्वानरवस्वग्निदेवऋभुरुद्रेभ्य इदम् ॥

4. स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि स्वाहा । मित्रावरुणेन्द्राग्न्यदितिभ्य इदम् ।

5. स्वस्ति पन्थानमनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददता

घ्नता जानता सङ्गमेमहि स्वाहा । सूर्याचन्द्रमोभ्यामिदम् ।

6. स्वस्त्ययनं तार्क्ष्यमरिष्टनेमि महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसख समत्सु बृहद्यशो नावमिवारुहेम स्वाहा । तार्क्ष्याया-रिष्टनेमये इन्द्रसखायेदम् ।

7. अहोमुचमाङ्गिरसं गयञ्च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिश्शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु स्वाहा । स्वस्त्यात्रेयतार्क्ष्येभ्य इदम् ॥

8. पुनरावृत्य एकामृचमभ्यसेत् । 'स्वस्तिनो मिमीतामि'त्यादि । स्विष्टकृदादि सम्रावान्तं कृत्वा ।

अथाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं 'नम आव्याधिनीभ्य' इति निदधाति । (नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ।) अथ वाद्यादिमङ्गलसंयुक्तं शिशु निष्क्रमय्य श्लाघ्यानि चित्रीयाणि देवताप्रतिमानि चित्र्यमश्वत्थं वा अभ्यर्च्य, त्रिवृतान्नेन भक्ष्यपेयखाद्यरूपेण । "अशनं पानं खादमि"ति श्रुतिः । ब्राह्मणान् सम्पूज्य, 'चित्र्याणि प्रीयन्ता' इति पुण्याहं वाचयित्वा, 'चित्र्येभ्यः स्वाहे'ति देवतायै निवेद्य, पश्चात् पुण्याहम् । चित्र्यं प्रदक्षिणीकृत्य, स्वस्तिमङ्गलयुक्तस्सन् गृहं नयेत् । परिषेचनादि समानम् ॥

## अन्नप्राशनम् ॥

षष्ठे मास्यन्नप्राशनम् । अनुकूले शुभदिने कुर्यात् । पूर्वेद्युः नान्दीमुखं प्रतिसरं च कृत्वा, श्वोभूते स्नानादिचतुष्टयं कृत्वा, संकल्प्य, 'सविता प्रीयतामि'ति

पुण्याहं कृत्वा । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा, अथाज्याहुतीरुपजुहोति । 'अहमस्मि प्रथमजा ऋतस्ये'त्यष्टाभिः 'मदादित्या अधि सर्वे तपन्ती'त्यन्तम् ।

1. अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो अमृतस्य नाभिः ।
यो मा ददाति स इदेवमावाः । अहमन्नमन्नमदन्तमद्मि स्वाहा ।
अन्नायेदम् ।

2. पूर्वमग्नेरपि दहत्यन्नम् । यत्तौहासाते अहमुत्तरेषु । व्यात्तमस्य
पशवस्सुजम्भम् । पश्यन्ति धीरा प्रचरन्ति पाकास्स्वाहा ।
अन्नायेदम् ।

3. जहाम्यन्यन्न जहाम्यन्यम् । अहमन्न वशमिच्चरामि ।
समानमर्थं पर्येमि भुञ्जत् । को मामन्नम्मनुष्या दयेत स्वाहा ।
अन्नायेदम् ।

4. पराके अन्नन्निहित लोक एतत् । विश्वेर्देवे पितृभिर्गुप्तमन्नम् ।
यदद्यत लुप्यते यत्परोप्यते शततमी सा तनूर्मे बभूव स्वाहा ।
अन्नायेदम् ।

5. महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवञ्च पृश्निं पृथिवीञ्च
साकम् । तथ्सम्पिबन्तो नमिनन्ति वेधस. । नैतद्भूयो भवति नो

कनीयस्स्वाहा । अन्नायेदम् ।

6. अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्यु तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानां स्वाहा । अन्नायेदम् ।

7. मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्सतस्य । नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी स्वाहा । अन्नायेदम् ।

8. अहं मेघस्स्तनयन्वर्षन्नस्मि । मामदन्त्यहमद्म्यन्यान् । अहं सदमृतो भवामि । मदादित्या अधि सर्वे तपन्ति स्वाहा । अन्नायेदम् ।

स्विष्टकृदादि सस्रावान्तं कृत्वा, अथाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं निदधाति । 'नम आव्याधिनीभ्य' इति । अथ सौवर्णे राजते कांस्ये वा पात्रे पायसमोदनं दध्ना मधुना घृतेन अद्भिः संमिश्रीकृत्य, अभीष्टदेवतायै निवेद्य, मातुः स्वस्य वा अङ्के आसीनं शिशुं प्राशयेत् ।

मानुषे ऋषिपितॄणां च उत्सर्गे मलमूत्रयोः ।
निवीती स्याद्विना होमं प्रजासंस्कारकर्मसु ॥

इति निवीती भूत्वा सुवर्णेन प्राशयेत् । 'या जाता ओषधय' इति षड्भिः भूर्भुवस्सुवरपामोषधीनां रसं प्राशयामि, शिवास्त आप ओषधयस्सन्तु, अनमीवास्त आप ओषधयस्सन्तु' इति षड्भिरप्यनुषङ्गः । प्रत्येकं हस्तप्रक्षालनं च ।

1. या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामह्ँ शतं धामानि सप्त च । भूर्भुवस्सुवरपान्त्वौषधीनाँ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनर्मा वास्त आप ओषधयस्सन्तु ।

2. शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा शतक्रत्वो यूयमिमं मे अगदं कृत । भूर्भुवस्सुवरपान्त्वौषधीनाँ + सन्तु ।

3. पुष्पावती. प्रसूवतीः फलिनी रफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः । भूर्भुवस्सुवरपान्त्वौषधीनाँ +सन्तु ।

4. ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । रपाँसि विघ्नतीरितर पश्चातयमाना । भूर्भुवस्सुवरपान्त्वौषधीनाँ +सन्तु ।

5. अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् । भूर्भुवस्सुवरपान्त्वौषधीनाँ +सन्तु ।

6. यदह वाजयन्निमा ओषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा । भूर्भुवस्सुवरपान्त्वौषधीनाँ +सन्तु ।

अथोपवीती । परिषेचनादि समानम् ।

य सुवर्णेन हस्तेन प्राशनं चामृतोपमम् ।
प्राङ्मुखो भोजन कुर्यात् दिवारात्रं तु कालयोः ॥

## कर्णवेधनम् ॥

सप्तमे अष्टमे वा मासि द्वादशे षोडशे अह्नि वा कुर्यात् । पूर्वेद्युः नान्दीमुख कुर्यात् । श्वोभूते स्नानादिचतुष्टय कृत्वा, सङ्कल्प्य, 'श्रोत्रिय. प्रीयतामि'ति पुण्याह वाचयित्वा । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा, पक्वाज्जुहोति-'श्रोत्रेण भद्र' 'येन प्राच्या' इति द्वाभ्यामिति ।

1. श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाचम्बहुधो-द्यमानाम् । श्रोत्रेण मोदश्च महश्च श्रूयते । श्रोत्रेण सर्वा दिश आशृणोमो ।

2. येन प्राच्या उत दक्षिणा प्रतीच्यै दिशश्शृण्वन्त्युत्तरात् । तदिच्छ्रोत्र बहुधोद्यमानम् । अरान्ननेमिः परिसर्व बभूव स्वाहा । श्रोत्रायेदम् ।

स्विष्टकृतमवदायान्त परिधि साधयित्वा । अथाज्याहुतीरुपजुहोति । *प्राणोरक्षति विश्वमेजदि'त्येतेनानुवाकेन दशर्चेन । स्विष्टकृदादि संस्रावान्तं कृत्वा, अथाग्रेणाग्नि वेणुपर्णेषु हुतशेषं निदधाति 'समुद्राय वयुनाय सिन्धूनां पतये नम' इति ।

समुद्राय वयुनाय सिन्धूना पतये नमः । नदीनाꣳसर्वासा पित्रे ...

* इमे मन्त्राः ९६, 97-पृष्ठयोः द्रष्टव्याः ।

जुहुता विश्वकर्मणे विश्वाहा मर्त्यं हविः ॥

ततः 'प्रजापति प्रीयतामि'ति पुण्याहम्। लोहितसूच्या बिल्वकण्टकेन वा दक्षिणं कर्णमातृणत्ति 'गायत्रीत्रिष्टुप्जगत्य अनुष्टुक्पङ्क्तया सह+सूचीभिः शिम्यन्तु त्वे'ति ।

गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्तया सह । बृहत्युष्णिहा ककुप्सूची-भिश्शिम्यन्तु त्वा ।

ततः सव्यमातृणत्ति 'द्विपदा या चतुष्पदा सूचीभि शिम्यन्तु त्वे'ति।

द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा । सछन्दा या च विच्छन्दास्सूचीभिश्शिम्यन्तु त्वा ।

लोहितसूत्रेण शणसूत्रेण वा कर्णौ बध्नाति 'वरुणस्य स्कम्भनमसि' इति मन्त्रावृत्तिः। परिषेचनादिसमाप्तिः । श्वोभूते विस्रंसयति । 'वरुणस्य स्कम्भसंर्जनमसि' इत्युभयत्र मन्त्रावृत्ति. । अत ऊर्ध्वं सूत्रेण, वेणुकाण्डेन वा वर्धयेत् ।

## अथ आयुष्यहोमः ॥

संवत्सरे संवत्सरे, षट्सु षट्सु, चतुर्षु चतुर्षु वा मासेषु वा, ऋतावृतौ, मासि मासि वा, कुमारस्य जन्मनक्षत्रे कार्यः। प्रथमारंभे नान्दीमुखं कर्तव्यम् । आचार्यकृत्यमिदम्। 'आयुष्मान् प्रीयताम्' इति पुण्याहम् । चरुद्वयं, क्षीरपक्व, जलपक्व च। अथ देवयजनोल्लेखनादि 'अग्नय आयुष्मते वो जुष्टं निर्वमामी'ति प्रथमचरुनिर्वापणम्। 'प्राणाय वो जुष्टं निर्वपामी'ति द्वितीयम्।

आग्निमुखात् कृत्वा, प्रथमचरौ पक्त्वा होमः— 'आयुष्ट,' 'आयुर्दा अग्न' इति द्वाभ्याम्।

1 आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयति परायक्ष्मꣳसुवामितोम् ।

2. आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमग्ग् स्वाहा । आयुर्देऽग्नय इदम् ।

स्विष्टकृतमवदाय, अन्तः परिधि सादयित्वा, अन्तरेणाग्निं आज्यस्थालीं च प्रणीय, चरुन्निधाय, आज्याहुतीर्जुहोति । 1'यो ब्रह्मा ब्रह्मण' इत्यष्टचैन षड्विंशतिकृत्वः पर्यायैराज्याहुतीः कृत्वा, प्राणाय चरवे अपनयति। प्रत्येकं संपातहुतं अष्टोत्तरसहस्राहुती. हुत्वा, स्विष्टकृदादि संस्रावान्तं कृत्वा । अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेष निदधाति । 'मानो महान्तं' 'मानस्तोक'इति द्वाभ्याम् ।

1. मानो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुतमान उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मानस्तनुवो रुद्र रीरिषः ।

2. मा न स्तोके तनये मा न आयुषि मा नो गोषु मा नो

1. अयमनुवाकः 71, 72-पृष्ठयोः द्रष्टव्यः ।

अश्वेषु रीरिषः । वीरान्मा नो रुद्रभामितोऽवधीर्हविष्मन्तो नमसा विधेम ते । परिषेचनादि कृत्वा ।

अपरेणाग्नि, प्राङ्मुख उपविश्य, वाग्यतः स्थालीपाकं सगण. प्राश्नाति। 1'आयुरसीति' प्राश्य, अप आचम्य, जठरमभिमृशति--2'यत.,' स्वस्तिदा' इति द्वाभ्याम् । अथाग्निमुपतिष्ठते । बालाना ग्रहज्वरपीडने आयुष्यसूक्तेन कुमारं स्पृष्ट्वा जपेत् । एतैरेव मन्त्रैः आहुतीर्वा जुहुयात् । एतैरेव मन्त्रैर्बलिं हरेत् । पिशाचाद्याविष्टे, 3'ऋताषाडि'त्यनुवाकं, 'अयं पुर' इति पञ्चपर्यायम् ।

अयंपुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्चरथौजाश्च सेनानिग्रामण्यौ पुंजिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेतीरक्षाꣳसि प्रहेतिरयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथे चित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्याचाप्सरसौ दंक्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहे तिरय पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचती चानुम्लोचती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिरयमुत्तरात्सं- यद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची

1. अयं मन्त्रः 37-पृष्ठे द्रष्टव्यः ।
2. इमौ मन्त्रौ 38-पृष्ठे द्रष्टव्यौ ।
3. अयं अनुवाकः 24-पृष्ठे द्रष्टव्यः ।

चाप्सरसा वापो हेतिर्वातः प्रहेतिरयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चा-
रिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फू-
र्जन्प्रहेतिरतेभ्यो नमस्ते नो मृडयंतु तेयं द्विष्मो यश्च नो द्वेष्टि तं वो
जंभे दधामि ॥

'समीची नामासी'ति पर्यायषट्कम् ।

1. समीचीनामासि प्राचीदिक्तस्यास्तेग्निरधिपतिरसितो रक्षिता
यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयता ते यं द्विष्मो यश्च
नो द्वेष्टि त वां जंभे दधामि ।

2. ओजस्विनी नामासि दक्षिणा दिक्तस्यास्त इंद्रोधिपतिः पृदाकू
रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्या नम स्तौनो मृडयता ते यं द्विष्मो
यश्च नो द्वेष्टि तं वां जंभे दधामि ।

3. प्राची नामासि प्रतीचीदिक्तस्यास्ते सोमोधिपतिः स्वजोरक्षिता
यश्चाधिपतिर्यश्च गोप्ता ताभ्या नमस्तौ नो मृडयता ते यं द्विष्मो यश्च
नो द्वेष्टि तं वां जभे दधामि ।

4. अवस्था वा नामास्युदीची दिक्तस्यास्ते वरुणोधिपतिस्तिरश्च

राजीरक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्या नमस्तौ नो मृडयता ते यं द्विष्मो यश्च नो द्वेष्टि तं वा जंभे दधामि।

5. अधिपत्नीनामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्या नमस्तौ नो मृडयता ते य द्विष्मो यश्च नो द्वेष्टि त वा जभे दधामि।

6. वशिनी नामासीयं दिक्तस्यास्ते यमोधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्या नमस्तौ नो मृडयता तेय द्विष्मो यश्च नो द्वेष्टि तं वा जंभे दधामि।

'हेतयो नामस्थे'ति षट्।

1. हेतयो नामस्थ तेषा वः पुरोगृहा अग्निर्व इषवः सलिलो वातनामं तेभ्यो वो नमस्तेनो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि त वो जभे दधामि।

2. निलिंपानामस्थ तेषा वो दक्षिणा गृहाः पितरो व इषवः सगरो वातनामं तेभ्यो वो नमस्तेनो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जभे दधामि।

3. वज्रिणो नामस्थ तेषा वः पश्चाद्गृहाः स्वप्नो व इषवो गह्वरो वातनाम तेभ्यो वो नमस्तेनो मृडयत तेय द्विष्मो यश्च नो द्वेष्टि त वो जम्भे दधामि ।

4. अवस्था वा नो नामस्थ तेषा व उत्तराद्गृहा आपो व इषवः समुद्रो वातनामं तेभ्यो वो नमस्ते नो·मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि त वो जंभे दधामि ।

5. अधिपतयो नामस्थ तेपा व उपरि गृहा वर्प व इषवो वस्वान् वातनाम तेभ्यो वो नमस्तेनो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ।

6. क्रव्यानामस्थ पार्थिवास्तेषा व इह गृहा अन्न व इषवो निमिषो वातनाम तेभ्यो वो नमस्ते नो मृडयत ते य द्विष्मो यश्च नो द्वेष्टि तं वो जंभे दधामि ।

'नमो अस्तु सर्पेभ्य इति त्रय च जपेत् ।

1. नमो अस्तु सर्पेभ्यो ये केचपृथिवीमनु । ये अतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । ये दोरोचने दिवो ये वा सूर्यस्य रश्मिपु । येषामप्सु

सदः कृतं तेभ्यः सर्पेभ्यो नमः । या इषवो यातुधानाना ये वा

वनस्पतीॅरनु । ये वा वटेषु शेरते तेभ्यः सर्पेभ्यो नमः ।

एतैरेवाहुतीर्वा जुहुयात् । एतैरेव बलि हरेद्वा । एवमायुष्कामः कुर्यात् ।

## अथ नक्षत्रहोमः ॥

मासि मासि, ऋतावृतौ वा, संवत्सरे वा अब्दपूर्तौ कुमारस्य जन्मनक्षत्रे कार्यः । आद्यारम्भे नान्दीमुखं कुर्यात् । 'अमुकनक्षत्रजातस्य अमुकनामधेयस्य नक्षत्रहोम करिष्ये । अत्र पुण्याहदेवता अग्न्यादयः प्रीयन्ताम् । अग्नि-प्राजापत्यादयः प्रीयन्ताम् । अग्निसोमादयः प्रीयन्तामि'त्यादि कृत्तिकानक्षत्रमारभ्य तत्तज्जन्मनक्षत्रेण सह वदेत् । अत्र आ यः प्रथमश्चरु. । यथानक्षत्रचरुर्द्वितीयः । अनुमत्यै तृतीयः । चन्द्रमादयः सप्तचरवः । दशहविष्ककर्मेदम् । श्यामाकादीनि द्रव्याणि । अशक्तः द्रव्यैक्यादेकभाण्डपचनं कुर्यात् ।

औपासनाग्नौ मुखान्त कृत्वा, पक्वाज्जुहोति । 'अग्निर्मूर्धा,' 'भुवोयज्ञ' इति द्वाभ्या प्रथमः ।

1. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाॅरेताॅसि जिन्वति स्वाहा । अग्नय इदम् ।

2. भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षा जिह्वामग्ने चकृषे हव्यवाहं स्वाहा । अग्नय इदम् ।

अथ नक्षत्रेष्टिषु उक्ताभ्या तत्तन्नक्षत्रमन्त्राभ्या द्वाभ्या द्वितीयहोमः। यथा 'अग्निर्नः पातु' 'यस्य भान्ती'ति द्वाभ्याम्।

1. अग्निर्नः पातु कृत्तिकाः। नक्षत्रन्देवमिन्द्रियम्। इदमासां विचक्षणम्। हविरासञ्जुहोतन स्वाहा। अग्नय इदम्।

2. यस्य भान्ति रश्मयो यस्य केतवः। यस्येमा विश्वा भुवनानि सर्वा। स कृत्तिकाभिरभिसंवसानः। अग्निर्नो देवस्सुविते दधातु स्वाहा। अग्नय इदम्।

एवं रोहिण्यादिषु द्वाभ्या द्वितीयहोमः। *'अनुनोद्यानुमतिः' 'अन्विद-मनुमते त्वं' इति द्वाभ्या तृतीयहोमः। 'नवो नवो भवति,' 'यमादित्या' इति द्वाभ्या चतुर्थः।

1 नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे। भाग देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरति दीर्घमायुः स्वाहा।

2. यमादित्या अंशुमाप्याययन्ति यमक्षित मक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पति राप्यायन्तु भुवनस्य गोपाः।

* इमौ मन्त्रौ 89-पृष्ठे द्रष्टव्यौ।

'ये विरूपे', 'वयं देवीरि'ति द्वाभ्या पञ्चमः—

1. ये विरूपे समनसा सव्ययन्ती। समानन्तन्तु परितातनाते। विभू प्रभू अनुभू विश्वतो हुवे। ते नो नक्षत्रे हवमागमेतम्।

2. वयन्देवी ब्रह्मणा संविदाना। सुरत्नासो देववीतिन्दधाना। अहोरात्रे हविषा वर्धयन्तः। अतिपाप्मानमतिमुक्त्या गमेम।

'प्रत्युव' 'उदस्रिया' इति द्वाभ्या षष्ठः—

1. प्रत्युव दृश्यायती। व्युच्छन्ती दुहिता दिवः। अपो मही वृणुते चक्षुषा। तमो ज्योतिष्कृणोति सूनरी।

2. उदस्रियास्स चते सूर्यः। सचा उद्यन्नक्षत्रमर्चिमत्। तवेदुषो व्युषि सूर्यस्य च। सम्भक्तेन गमेमहि।

'तन्नो नक्षत्रं,' 'प्रनक्षत्राये'ति द्वाभ्या सप्तमः—

1. तन्नो नक्षत्रमर्चिमत्। भानुमत्तेज उच्चरत्। उपयज्ञमिहागमत्।

2. प्रनक्षत्राय देवाय। इन्द्रायेन्दुꣳहवामहे। सनस्सविता सुवत्सनिम्। पुष्टिदां वीरवत्तमम्।

'उदुत्यं,' 'चित्रं देवानामि'ति द्वाभ्यां अष्टमः—

1. उदुत्यञ्जातवेदसं देव वहन्ति केतवः। दृशे विश्वाय सूर्यम्।

2. चित्रन्देवाना मुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्ने। आप्रा-
द्यावापृथिवी अन्तरिक्ष सूर्य आत्मा जगतस्तस्थुषश्च।

'अदितिर्न उरुष्यतु' 'महीमूषा मातरमि'ति द्वाभ्या नवमः—

1. अदितिर्न उरुष्यन्वदितिश्शर्म यच्छतु। अदितिः पात्व हस।

2. महीमूषा मातर सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रा-
मजरन्ती मुरूची सुशर्माणमदिति सुप्रणीतिम्।

'इद विष्णु.' 'प्रतद्विष्णुरि'ति द्वाभ्या दशमः—

1. इद विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपा सुरे।

2 प्रतद्विष्णुस्तवते वीर्याय। मृगो न भीमः कुचरो गिरिष्ठा.।
यस्योरुषु त्रिषु विक्रमणेषु। अधिक्षियन्ति भुवनानि विश्वा।

स्विष्टकृतमवदाय, अन्त.परिधि सादयित्वा। अथाज्याहुतीः उपजुहोति। 'अग्नये स्वाहे'ति उपहोमान् जुहोति। ततः, *'चन्द्रमसे स्वाहे'त्यादि सप्त। ततः स्विष्टकृदादिचरुशेषप्रदानमायुष्यहोमवत्। सवत्सरादयः कुर्याच्चेदाद्यहोमत्रयं हुनेत्। उपहोमश्चन्द्रमस आदिबलिप्राशनमुक्तवत्। प्रत्यब्द जन्मनक्षत्रे

* अयं मन्त्रोऽन्यत्र द्रष्टव्यः।

कुर्यात् । श्रियमायुष्यमवाप्नुयात् । मासे मासे यदि 'मासेभ्यः स्वाहा', ऋतावृतौ यदि 'ऋतुभ्यः स्वाहा, संवत्सरे संवत्सरे यदि 'संवत्सराय स्वाहा' इति विशेषः ।

## अथ चौलम् ॥

संवत्सरेषु त्रिषु पञ्चमेषु गतत्रिभागेषु वटोश्च चौलम् ।
उदग्गतेऽर्के गुरुशुक्रतेजःप्रकाशिते व्योम्नि च शुक्लपक्षे ॥

इति 'द्वादशमासाः संवत्सर' इति वर्षपक्षे प्रतिवर्ष गतत्रिभागेषु पश्चात् कर्तव्यम् । गर्भादिपक्षे दशमासाः संवत्सरः । तत्रापि एवं त्रिभागे गते सति कर्तव्यम् । गर्भादिपक्षस्तु गौणः । उपनयने मुख्यः ।

चूडाकर्म न कर्तव्यं पुनर्गर्भो भवेद्यदि ।
अप्रसूतेऽपि कर्तव्ये प्रसूते मरणं भवेत् ॥

चूडाकृतौ शिशोर्माता गर्भिणी तु यदा भवेत् ।
विपद्यते ततो गर्भो दम्पती च तदब्दतः ॥

अनाप्तगर्भिणी माता कुर्यादेव शिशोर्बुधः ।
चूडाकर्म प्रशंसन्ति केनाप्यन्तरितस्य च ॥

सूनोर्मातरि गर्भिण्या चूडाकर्म न कारयेत् ।
पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥

चौलं शिशोर्मातरि गर्भवत्यां कुर्यात्पुरस्तादपि सप्तमासात् ।
गर्भे द्वितीयेऽपि शिशोश्च चौलं शेषं शिशोर्गर्भविनाशनाय ॥

अथ उदगयने आपूर्यमाणक्षे पुण्ये नक्षत्रे चौलं कुर्यात् ।

दैवोत्सवे प्रवृत्ते तु मनुष्यस्योत्सवादिकम् ।
तस्मिन् ग्रामे न कर्तव्यं यदि कुर्याद्विनश्यति ॥

अथ पूर्वेद्युर्नान्दीमुखं, रात्रावुदकशान्तिं, प्रतिसरं च कृत्वा, अपरेद्युः सद्यो वा अङ्कुरार्पणं कृत्वा, 'अमुकनक्षत्रजातम् अमुकनामानं कुमारं चौलकर्मणा सस्करिष्ये' इति संकल्प्य, 'केशिनः प्रीयन्तामि'ति पुण्याहम् । औपासनैकदेशे अग्निमुखान्त कृत्वा,

उष्णशीतोदके दर्भौ स्वधितिं गोशकृत्तथा ।
पात्रसादनकाले तु सादयन्नपि तं बुधः ॥

अथ पक्वाज्जुहोति 'ये केशिनः प्रथमाः सत्रमासत' इति पुरोनुवाक्यामनूच्य, 'नर्ते ब्रह्मण' इति याज्यया जुहोति ।

1. ये केशिनः प्रथमास्सत्रमासत । येभिराभृतं यदिदं विरोचते ।
तेभ्यो जुहोमि बहुधा घृतेन । रायस्पोषेणेमं वर्चसा सꣳसृजाथोम् ।

2. नर्ते ब्रह्मणस्तपसो विमोकः । द्विनाम्नी दीक्षा वशिनी ह्युग्रा ।
प्रकेशास्सुवते काण्डिनो भवन्ति । तेषां ब्रह्मेदीशे वपनस्य नान्यस्स्वाहा ।
केशिभ्य इदम् ।

स्विष्टकृतमवदायान्तःपरिधि सादयित्वा । अथाज्याहुतीरुपजुहोति 'आरोह प्रोष्ठं विषहस्व शत्रूनि'त्यान्तादनुवाकस्य ।

1. आरोह प्रोष्ठ विषहस्व शत्रून् । अवास्राग्दीक्षा वशिनी ह्युग्रा । देहि दक्षिणां प्रतिरस्वायुः । अथामुच्यस्व वरुणस्य पाशात् स्वाहा । केशिभ्य इदम् ।

2. येनावपत्सविता क्षुरेण। सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्योर्जेमम । रय्या वर्चसा सꣳसृजाथ स्वाहा। ब्रह्मभ्य इदम्।

3. मा ते केशाननुगाद्वर्च एतत्। तथा धाता करोतु ते। तुभ्यमिन्द्रो बृहस्पतिः । सविता वर्च आदधात्स्वाहा। धात्र इन्द्राय बृहस्पतये सवित्र इदम्।

4. तेभ्यो निधानं बहुधा व्यैच्छन् । अन्तरा द्यावापृथिवी अपस्सुवः। दर्भस्तम्बे वीर्यवृते निधाय। पौꣳस्ये नेम वर्चसा सꣳसृजाथ स्वाहा। द्यावापृथिवीभ्यामद्भ्य इदम।

5. बलन्ते बाहुवोस्सविता दधातु । सोमस्त्वानक्तु पयसा घृतेन। स्त्रीषु रूपमश्विनैत निधत्तम्। पौꣳस्येनेमं वर्चसा सꣳसृजाथ स्वाहा। सवित्रे सोमायाश्विभ्यामिदम्।

6. यत्सीमन्तं कङ्कतस्ते लिलेख। यद्वा क्षुरः परिवव्रर्ज वपग्गस्ते। स्त्रीषु रूपमश्विनैत निधत्तम्। पौꣳस्येनेमꣳसꣳसृजाथो वीर्येण स्वाहा। अश्विभ्यामिदम्।

स्विष्टकृदादिसंस्रावान्त कृत्वा। अथाग्रेण अग्नि उदुम्बरपर्णेषु हुतशेष निदधाति। 'नमो हिरण्य बाहवे सेनान्ये दिशा च पतये नम.' इति। अपरेण अग्नि उभयीरपस्सन्निषिञ्चति। उष्णासु शीता आनयति। 'उष्णेन वायवुदकेने ह्यदितिः केशान् वपतु' इति। प्रा मुख शिशु कृत्वा, ताभिः शिर आर्द्रयति। 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति। दक्षिणे गोदानप्रदेशे ऊर्ध्वाग्र बर्हिरनुच्छयति। उन्मुखं शिशुं कृत्वा ताभिरद्भिः, 'ओषधे त्रायस्वैनमि'ति। सव्यहस्तेन दर्भैः केशानवष्टभ्य, दक्षिणेन हस्तेन क्षुरं संस्पृशेत्। 'ज्योक् च सूर्य दृशे' इति क्षुरमादाय दर्भस्थले तिर्यङ्निदधाति। 'स्वधिते मैनꣳ हिꣳसीः' इति। अथास्य केशान् वपति। 'येनावपत् सविता क्षुरेण जाये'ति। अथ पतितकेशान्निरीक्षते, 'मा ते केशा+दधादि'ति। अत्र यथाकुलधर्मं शिखा कृत्वा, शेषान् केशान् नापितो वपेत्। अथैनमेकशिखः, त्रिशिखः पञ्चशिखो वा यथैवैषा कुलधर्मः स्यात्। सर्वान् केशान् समुच्छिद्य दर्भस्तम्बे निदधाति 'तेभ्यो निधानं बहुधा+सृजाथे'ति। अथैनमुष्णोदकेन स्नापयति 'बलं ते बाहुवोरि'ति मन्त्रेण। अथैनमाच्छाद्यालकृत्य सौवर्णेन पुष्पेण शिखामलङ्कृत्य गन्धपुष्पवस्त्रभूषणै भूषयेत्। त्रिवृतान्नो ब्राह्मणान् सपूज्य,'प्रजापतिः प्रीयतामि'ति पुण्याहम्। परिषेचनादि समानम्। पञ्चशिखेति। पुरो दक्षिणे पश्चिमतश्च वामे चतुरगुलादूर्ध्वे अधश्च मध्ये सहस्रद्वय शतमष्टौ च केशैरेकशिखा पञ्चशिखः प्रकीर्तितः॥

शताना सप्त त्रिगुणमष्टोत्तरमथापि वा।
केशानामपि संख्याः स्युः शिखैका परिकीर्तिता॥

मध्ये च दक्षिणे वामे मध्ये पश्चात्पुरोऽथवा ।
कुलधर्मं यथापूर्वं त्रिशिखः परिकीर्तितः ॥

केचित्पूर्वशिखा मूर्ध्नि केचित्पश्चिमतः शिखाः ।
यथाऋषि शिखा धार्या यथा पूर्वं तथा चरेत् ॥

सूत्रं शिखा च पुण्ड्रं च समयाचारमेव च ।
पूर्वैराचरितं कुर्यात् अन्यथा पतितो भवेत् ॥

माता चेद् गर्भिणी चौलमौरसस्य न कारयेत् ।
षण्मासं वर्जयेत् क्षौरं चौलादूर्ध्वं विशेषतः ॥

## अक्षरग्रहणम् ॥

उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विघ्नविनायकं च गुलौदनाद्यैरभिपूज्य कुर्यात् ॥

पञ्चमे वयसि उत्तरायणे सुमुहूर्ते शिशुं स्नापयित्वा, अलंकृत्य, 'अकारादयः प्रीयन्तामि'ति पुण्याहम् । लौकिकाग्नौ अग्निमुखान्ते स्रुचा सकृद्ग्राहेण पक्वाज्जुहोति । पक्वहोमादौ आकारादीनामग्निः ऋषिः, जगतीछन्दः, वाग्देवी देवता । अकाराय स्वाहा । आकाराय स्वाहा । इत्यादि-क्षकारान्तानेकपञ्चाशद्धोमान् कुर्यात् । ततः ब्रह्मणे स्वाहा । वाचे स्वाहा । विष्णवे स्वाहा । श्रियै स्वाहा । रुद्राय स्वाहा । रुद्राण्यै स्वाहा । तैत्तिरीयशाखायै स्वाहा । एवं तत्तच्छाखिनः । 'यजुर्वेदाय स्वाहा' एवं तत्तद्वेदिनः । 'बोधायनाय स्वाहा' एवं तत्तत्सूत्रिणः । व्याहृतीश्चतस्रो हुत्वा । एवं चतुष्षष्टिप्रधानाहुतयः । स्विष्टकृतमवदाय, अन्तःपरिधि सादयित्वा । अथाज्याहुतीरुपजुहोति । व्याहृतीर्हुत्वा, 'अग्नये स्विष्टकृते स्वाहे'ति स्विष्टकृतं हुत्वा, जयादिसंस्रावान्त कृत्वा । अथ एकपञ्चाशदक्षरान् दशकृत्वो जप्त्वा, ततः कांस्यपात्रे अक्षरानभिमन्त्र्य, शालितण्डुलान्निनीय, अक्षरैस्तण्डुलान् दशकृत्वोऽभिमन्त्र्य,

सुप्रसन्नमनाः पुरोहितः प्राङ्मुखः प्राङ्मुखं शिशुं प्राणायामान् कारयित्वा, शिरस्स्पृष्ट्वा, अकारादिमन्त्रैः अभिमन्त्र्य, ब्राह्मणाननुज्ञाप्य, चतुष्कृत्वो अध्यापयेत्। तण्डुलेषु दशकृत्वो लेखयित्वा, पुण्याहं वाचयेत्। 'सरस्वती प्रीयतामि'ति पुण्याहम्। एवं शिशुं, शिशुद्वयं, चतुष्टयं वा अध्यापयेत्। एवं यदि कृत्वा-आरभेत, वाक्सिद्धिर्भवति। विनायकाय सरस्वत्यै गुलौदनादि निवेद्य, उद्वास्य, परिषेचनादि समानम्। यथाशक्ति ब्राह्मणान् भोजयेत्।

## उपवीतविधिः॥

यज्ञोपवीतं कार्पाससूत्रेण ब्राह्मणस्य, शणसूत्रेण राज्ञः, आविसूत्रेण वैश्यस्य। कुशमयं वा सर्वेषाम्।

नदीतीरे सुकृपिते व्युत्पस्य वृपलेन च।
कार्पासरसमुद्भूतमुपवीताय शोभनम्॥

शुद्धया स्नातया ऽऽचान्तब्राह्मणकन्यया वा, ब्राह्मणविधवया वा, ब्राह्मणेन वा निर्मितं प्रदक्षिणीकृत्य सूत्रं, स्नातः शुचिरादाय, ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य, देवतागारे, गोष्ठे, नद्यां वा, शुचौ समे देशे समुपविश्य, दक्षिणहस्ते अङ्गुष्ठवर्जिताङ्गुलिचतुष्टयमध्यपर्वप्रदेशे षण्णवतिसंख्यया प्रदक्षिणमावृत्य, तत्सूत्रं तथा द्विगुणं त्रिगुणंच कृत्वा, अद्भिः प्रक्षालयति। 'आपो हि ष्ठा मयो भुव' इति तिसृभिः, 'हिरण्यवर्णा' इति चतसृभिः, 'पावमानीभि'श्च शुचिना सहायेन एकं शिरो ग्राहयित्वा, हस्तयोः प्रतिष्ठापयति। ओं भूः प्रतिष्ठापयामि'। 'ओं भुवः प्रतिष्ठापयामि'। 'ओं सुवः प्रतिष्ठापयामि'। 'ओं भूर्भुवस्सुवः प्रतिष्ठापयामि'। अथ प्रसारयति, ओं भूर्भुवस्सुवः,' 'ओजो बलमि'त्येतेनानुवाकेन प्रदक्षिणाकारं यावत्सुदृढं सुश्लक्ष्णं भवति तावत् प्रसार्य, सावित्र्या तत्त्रिगुणं कृत्वा, 'भूरग्नि चे'ति त्रिभिः मन्त्रैः तन्तुत्रयाणां दक्षिणतः आरभ्य, अभिमन्त्रणम् 'भूर्भुवस्सुवः चन्द्रमसमि'ति।

अथ ग्रन्थिं करोति। 'यथा न श्रेयसश्चरदि'ति चतुर्भिर्मध्ये, द्विगुणमन्ते। अथ पूर्ववत् 'ओं प्रतिष्ठापयामी'त्याद्यैः प्रतिष्ठाप्य, सर्वतः सुदृढं प्रसार्य, दृढं कुर्यात्। 'उशन्तस्त्वा हवामह' इत्यृचमत्र केचिज्जपेयुः।

उपवीतं दृढाकारं कृत्वात्र ऋषितृप्तये।
तृणं छित्वा करे मुख्यैः आवृत्य सेवयेज्जले॥

नवतन्तुदेवता.—

ओंकारोऽग्निश्च नागश्च सोमः पितर एव च।
प्रजापतिश्च वायुश्च सोमः शर्वश्च देवता॥

त्रिगुणीकृत्य नवकान् ब्रह्मविष्णुशिवात्मकान्।
कृत्वैकग्रन्थिमेतत्तु ब्रह्मसूत्रमितीरितम्॥

भुक्तोर्ध्वकाले न ध्यायेत् विकृतं दुर्दिने कृतम्।
उन्मृष्टान्तं रणच्छिन्नं सप्ततन्तुन् परित्यजेत्॥

आकारं दुर्दिनं हित्वा पूर्वाह्णे शोभनं कृतम्।
चतुर्वेदस्य चत्वारि त्रिवेदस्य त्रयं भवेत्॥

द्वे स्यातां वै द्विवेदस्य एकमेवैकवेदिनः।
ब्रह्मचारी वहेदेकं समावर्तो द्वयं वहेत्॥

बहिर्वस्त्रार्थमेकञ्च गृहमेधी तथैव च।
अजिनं वासः सूत्रं वा द्वितीयं यस्य तद्भवेत्।

तेन सह 'उपभूयते देवलक्ष्म कुरुत' इति न्यायात्।

यज्ञोपवीतमब्दाना दशके दशके गते।
एकैकमधिकं धार्यं आयुष्कामैर्विशेषतः॥

* नाभेरूर्ध्वं तु मेध्यं स्यात् अधो नाभे रमेध्यकम् ।
श्रेष्ठं नाभिसमं कुर्यात् उपवीतं विचक्षणः ॥

यज्ञोपवीतानाच्छादने प्रायश्चित्तं 'पाहिनो अग्न' इति पञ्चाहुतयः ॥

## ** उपनयनम्

चौलकर्माक्षरारंभमुपनीति व्रतानि च ।
अग्न्याधानं च सोमं च प्रकुर्यादुत्तरायणे ॥

'गर्भाष्टमेषु ब्राह्मणमुपनयीते'ति मुख्यकालः । 'आषोडशाद् ब्राह्मणस्यानात्ययकाल': इति गौणकालः' । शुद्राष्टमात्परं कालातीत प्रायश्चित्तं कर्तव्यम् 'आषोडशात् ॥ सप्तमे ब्रह्म वर्चसकामं' इति गर्भसप्तमं च श्रेष्ठम् ॥

जन्मादि वत्सरे षष्ठे कुर्यादेवोपनायनम् ।
पञ्चमेऽब्देऽथवा कुर्यात् कुमारश्चेत्पटु र्भवेत् ॥

कुमारस्तु बुद्धिमान्स्याद्यदि पञ्चमे वयसि कर्तव्यम् ॥

## ॥ अथ द्विशोभन विषयः ॥

एकमातृ प्रसूतानां एकस्मिन् वत्सरे अपि ।
विवाहं मौञ्जिबन्धं च व्रतंचौलं न कारयेत् ॥

पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरेऽपि च ।
पुत्र्युद्वाहं न कुर्वीत विवाहव्रतबन्धनम् ॥ [ह्वादूव्रत]

एकमातृप्रसूताना शुभद्वयमृतुत्रये ।
न कुर्याद्वर्ष भेदे तु द्विमासादूर्ध्वमिष्यते ॥

* नाभेरूर्ध्वमनायुष्यं अधस्ताच्च तपः क्षयः ॥

** येन खलुसंस्कारेण वटुः आचार्यसमीपं नीयते तदुपनयनम् ॥

फाल्गुने चैत्रमासे च पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रय विलम्बनम् ॥

न पुं विवाहोर्ध्वं मृतुत्रयेपि
विवाहकार्यं दुहितुः प्रकुर्यात् ।

न मण्डनाच्चापि हि मुण्डन च
स्यान्मुण्डनान्मण्डनमन्यदेव ॥
एवं विचार्य कर्तव्यम् ॥

## अत्र मातृ भेदे विशेषः ॥

पृथग्भवावेकलग्ने सोदरावुपनीयताम् ।
आद्याचार्यः पिताऽन्यस्तु भ्राता वापितृ सोदरः ॥

एकत्र लग्ने यदि पुत्रयुग्मं
शुभाय मौञ्जीव्रतकर्म कुर्यात् ।
आचार्ययुग्मं खलु वेदियुग्मं
नान्दीमुखे स्वस्व(स्य)पितृंश्च निन्ये॥

अत्र विशेषः—

स्वसृयुगे भ्रातृयुगे स्वसृभ्रातृ युगेऽथवा।
सहैकापि क्रिया कार्या मातृभेदे तथैव च ॥

इति भिन्नोदरयोः पुत्रयोरुपनयनविधिः ॥

एकगर्भप्रसूतौ चेत् एकवेदिमवाप्य च ।
एकाचार्येणैकलग्ने कुर्यान्मौञ्जीव्रतं यतः ॥

चौलोपनीति-सीमन्त-जातनाम्नीव पुंसवे ।
चतुर्व्रतोपाकरणे सोदरे युगपद्भवेत् ॥

कुर्यादृतुत्रयादर्वाक् मण्डनादन्यमण्डनम् ।
प्रवेशनिर्गमं चैव न कुर्यान्मण्डनत्रयम् ॥
द्विशोभन चैकगृहे न कुर्यात्
कुर्याच्च पश्चान्नवतेर्दिनेभ्यः [भिर्दिनैस्तु] ।
आरभ्यते कौतुकमङ्कुरं वा
द्वारान्तराचार्य विभेदतो वा ॥

**एकगर्भप्रसूतयोः ज्येष्ठकनिष्ठत्वं कथमुच्यते ॥**

यमलावेकगर्भे तु नारी वा पुरुषोऽपि वा ।
आद्यजातः कनिष्ठः स्यात् ज्येष्ठः पश्चात्समुद्भवः ॥
यमयोर्जातयोः ज्यैष्ठ्यं जन्मतः प्रोच्यते बुधैः ॥
एकगर्भे द्वयं जातं नारी वा पुरुषोऽपि वा ।
कनिष्ठः प्रथमोद्भूतः ज्येष्ठःपश्चात्समुद्भवः ।
गर्भस्य कस्यचिल्लोके चिराज्जननदर्शनात् ॥
यमयोर्जातयोर्ज्यैष्ठ्यं आधानाज्जैष्ठ्यते बुधैः ।
यस्मात्पूर्वाऽऽहितं गर्भंचिरकालेन जायते ॥*

अलं अतिप्रसङ्गेन ॥ निश्चयार्थः एकमातृप्रसूतानां चौलमुपनयनं विवाहं च तत्तदुत्सवसमाप्तेरनन्तरं आचार्यभेदेन द्वयोरभेदेन वा कुर्यात् ॥ तत्रापि उत्सवत्रयं न कुर्यात् ॥ वर्षभेदे तु द्विमासादूर्ध्वं ·क्रमेण विनापि उत्सवद्वयं कुर्यात् ॥ भिन्नोदरपुत्रयोरेककाले आचार्यवेदिभेदेन कुर्यात् । युग्मजननयोः पुत्रयोरुपनयनान्तं सर्वं एकत्र कुर्यात् ॥

आचार्येणैव कर्तव्यं द्विजातीनामुपायनम ।
तदाज्ञात्वा[ऽज्ञानं]शिशोर्गच्छेत् भास्करेण यथा तमः ॥

* स्मृति वाक्येषु न्यूनातिरे कादृश्यन्ते ॥

ब्रह्मोपदेशमात्रं वा कुर्यादाचार्यसत्तमः ।
आचार्याय त्रय दद्यात् अथवा शक्तिमात्रकम् ॥

भोजयित्वा शतं विप्रान् कुर्यादेवोपनायनम् ।
अशक्तोऽपि यथाशक्ति कृत्वा कर्म समाचरेत् ॥

प्रतिगृह्योपनीत्यर्थमिति तेनाऽऽचरेद्यदि ।
ब्राह्मणत्वफलं सर्वं(द्य)दातारमधिगच्छति ॥

शूद्राच्चेत् प्रतिगृह्णीयात् स मूढो नरकं व्रजेत् ।
सत्याशक्तः प्रतिग्राह्यं आत्मबन्धुषु वा चरे(ये)त् ॥

अथ 'वसन्ते ब्राह्मणमुपनयीत' यद्वा, ज्योतिश्शास्त्रोक्तकाले उत्तरायणे उपनयेत् सुमुहूर्ते सुलग्ने । पूर्वेद्युः नान्दीमुखं रात्राबुदकशान्ति प्रतिसरं च कृत्वा, सद्यो वाङ्कुरार्पणं च ॥

पूर्वेद्युरथवा सद्यः ब्रह्मातिथ्यं समाचरेत् ।

अथ शर्माणमेनं माणवकमुपनेष्ये । तदङ्गं पुण्याहं वाचयिष्ये । 'इन्द्रः प्रीयतामि'ति पुण्याहम् ॥ कुमारं भोजयित्वा, चौलवत् तूष्णीं केशानोप्य, स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं धारयन् वाचयति । दक्षिणं बाहुं उद्धरतेऽव धत्ते सव्यमिति यज्ञोपवीतम् ॥ यज्ञोपवीतं परमं +तेज इति ॥ *

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्य

मग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बल मस्तु तेजः ॥

* यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं ततोऽस्येदं तस्माद्यज्ञोपवीतकम् ॥

कुमारमप आचमय्यदेवयजनं दक्षिणभागे आनयति । अथ देवयजनोल्ले-खनप्रभृति पात्रसादनकाले

पालाशीं समिधं चाश्मवासश्च मेखला ततः ।
दण्ड चतस्रः पालाशीः घृताक्ताःसमिधः क्षिपेत् ॥

सूतकाग्निसमारोपणपक्षे मथित्वा । अन्यत्रपक्षे लौकिकाग्नौ अग्निमुखान्तं कृत्वा, पालाशीं समिधमाज्येनात्काऽभ्याधापयन्तं शिशुं वाचयति **'आयुर्दादेव-जरसमि'ति**

आयुर्दा देव जरसं गृणानो घृत प्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृत चारु गव्यं पितेव पुत्रं जरसे नयेम स्वाहा॥ आयुर्देऽग्नय इदम् ॥

अथैनमुत्थाप्य, उत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति, **'आतिष्ठे-ममि'**त्यृचा

आतिष्ठेम मश्मान मश्मेव त्व स्थिरो भव । अभितिष्ठ पृतन्यतः सहस्व पृतनायतः ॥

तिष्ये नक्षत्रे सद्यः कृत्तं परिधापयन् वाचयति, **'या अकृन्तन्नि'**त्यृचा

या अकृन्तन्नवयन् या अतन्वत याश्च देवी रन्तानभितोऽददन्त । तास्त्वा देवी जरसे सं व्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥

परिहितं वस्त्रमनुमन्त्रयते **'परिधत्तधत्तवाससैनमिति**

परि धत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत् सोमाय राज्ञे परि धातवा उ ॥ जरां गच्छासि परि धत्स्व वासो भवा कृष्टीनामभिशस्तिपा वा । शतं च जीव शरदः सुवर्चा रायश्च पोष मुप सं व्ययस्व॥ परीदं वासो अधि धास्वस्तयेऽभूरापीनामभि शस्ति पावा । शतं च जीव शरदः पुरूची वसूनि चायो वि भजासि जीवन् ॥

अथ मौञ्जीं त्रिवृता त्रिः प्रदक्षिणं परिव्ययन्वाचयति **'इयं दुरुक्तात्'** इति

इय दुरुक्तात् परि बाधमाना शर्मवरूथं पुनती न आगात् । प्राणापानाभ्या बल माभरन्ती प्रिया देवानां सुभगा मेखलेयम् ॥

मौञ्ज्यभावे कुशेन वा ॥

परिवीतामनुमन्त्रयते **'ऋतस्य गोप्त्रीति'**

ऋतस्य गोप्त्री तपसः परस्पीघ्नती रक्षः सहमाना अरातीः । सानः समन्त मनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम ॥

अथ नाभिदेशे ग्रन्थिं करोति । **'प्राणानां ग्रन्थिरसि स मा विस्रस'** इति त्रिभिः सह ग्रन्थिः ॥

अथास्मै कृष्णाजिनं प्रतिमुञ्चन्वाचति मित्रस्यचक्षुरिति

मित्रस्य चक्षुर्धरुणं बलीय स्तेजो यशस्वि स्थविरꣳ समिद्धम् । अना-
हनस्यं वसनं जरिष्णु परीदं वाज्यजिन दधेऽहम् ॥

उपवीतवदायामं धार्यं चैवोपवीतवत् ।
चतुरंगुलविस्तीर्णं बाह्यरोम च वर्णिनाम् ॥

दण्डमस्मै प्रयच्छति **'सोमोऽसि सोमयं माकुरु'** इति पालाशम् ।
**'ब्रह्मवर्चसमसि ब्रह्मवर्चसायत्वे'ति** बैल्वं वा

'अहं वृक्षस्य + सवर्चसमि'ति वार्क्षं वा दण्डं प्रदाय

अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं निरेरिव । ऊर्ध्वपवित्रो वाजिनीव
स्वमृतमस्मि । द्रविणꣳ सवर्चसम् ॥

**को'नामासी'** त्याचार्यो वदेत् । देवदत्तशर्मानामास्मि'इति स्वनामधेयं शिष्यो वदेत् ॥ प्राङ्मुखः सन्माणवकस्तिष्ठेत् । प्रत्यङ्मुखो गुरुः करेण दक्षिणेन गृह्णीयाद्दक्षिणं करम्। **'यस्मिन् भूतं च भव्यं** च +मह्यं गृह्णामि देवदत्तशर्मन्' इति शिशोर्दक्षिणहस्तं दक्षिणहस्तेन गृह्णाति ।

यस्मिन् भूतं च भव्यं च सर्वे लोकाः समहिताः । तेन गृह्णामि
त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णामि शर्मन् ॥

अथैन देवताभ्यः परिददाति, गृहीतहस्तं विसृजेत् पञ्चकृत्वो मुहुर्मुहुः ।

देवेभ्यस्त्वा परि ददामि देवदत्तशर्मन् । विश्वदेवेभ्यस्त्वा परिददामि देवदत्तशर्मन् । विश्वेभ्यस्त्वा देवेभ्यः परिददामि देवदत्तशर्मन् ॥ सर्वेभ्यस्त्वा देवेभ्यः परिददामि देवदत्त शर्मन् । सर्वाभ्यस्त्वा देवताभ्यः परिददामि देवदत्तशर्मन् ॥

अथ शिशु समीपे आनयेत् । देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यामुपनये देवदत्तशर्मन् ॥

अथ कुमारः पक्वाज्जुहोति । 'यश्छन्दसामृषभोविश्वरूप' इति पुरोऽनुवाक्यामनूच्य तयैव याज्यया जुहोति ।

यश्छन्दसा मृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् स बभूव। स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासो ३म् यश्छन्द सामृषभो+भूयास ँ स्वाहा ॥ मेधाकारायेन्द्रायेदम् ॥

अथ स्विष्टकृतमवदाय अन्तः परिधि सादयित्वा, गुरुराज्याहुतीरुपजुहोति । **'क्षेत्रियै त्वा निरृत्यैत्वे'ति** षड्भिरनुच्छन्दसं । प्रतिमन्त्रं चत्वारि वाक्यानि तथा **'ब्रह्मजज्ञानमि'ति** षड्भिश्च

1 क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे स्वाहा ॥ द्यावापृथिवीभ्यामिदम् ॥

2 शन्ते अग्निः सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्ष्ँ सह वातेन ते शन्ते चतस्रः प्रदिशो भवन्तु स्वाहा ॥ अग्नये द्यावापृथिवीभ्या मन्तरिक्षायेदम ॥

3 या दैवीश्चतस्रः प्रदिशो वातपत्नी रभि सूर्यो विचष्टे । तासां त्वा जरस आ दधामि प्र यक्ष्म एतु निर्ऋतिं पराचैः स्वाहा ॥ दिग्भ्यो वातपत्नीभ्य इदम् ॥

4 अमोचि यक्ष्माद् दुरितादवर्त्यै द्रुहः पाशान्निर्ऋत्यै चोदमोचि । अहा अवर्तिमविदत् स्योनमप्य भूद्भद्रे सुकृतस्य लोके स्वाहा ॥ इन्द्रायेदम ॥

5 सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन् व्येनसः। एवमहमिमं क्षेत्रियाज्जामि श्ँसाद् द्रुहो मुञ्चामि वरुणस्य पाशात् स्वाहा ॥ देवेभ्य इदम ॥

6 बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य । धत्त॑
रयिं॑ स्तुवते कीरये चि यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥
बृहस्पतय इन्द्रायेदम् ॥

7 ब्रह्म जज्ञानं प्रथमं पुरस्ता द्विसीमतः सुरुचो वेन आवः । सबुध्निया
उपमा अस्य विष्ठास्सतश्च योनि मसतश्च विवः स्वाहा ॥ ब्रह्मण इदम् ॥

8 पिता विराजा मृषभो रयीणा मन्तरिक्षं विश्वरूप आ विवेश । तमर्कै
रभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः स्वाहा ॥ ब्रह्मण इदम् ॥

9 ब्रह्म देवानजनयद्ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितं
ब्रह्म ब्राह्मण आत्मना स्वाहा ॥ ब्रह्मण इदम् ॥

10 अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूताना
ज्येष्ठं तेन कोऽर्हति स्पर्धितु॑ स्वाहा ॥ ब्रह्मण इदम् ॥

11 ब्रह्मन्देवास्त्रयस्त्रिं॑शद् ब्रह्म न्निन्द्र प्रजापती । ब्रह्मन् ह विश्वा

भूतानि नावीवाऽन्तः समाहिताः स्वाहा ॥ ब्रह्मण इदम् ॥

12 चतस्र आशाः प्रचरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतं
पिन्व न्नजर॒ सुवीरं ब्रह्म समिद् भवत्याहुतीना॒ स्वाहा ॥
ब्रह्मण इदम् ॥

एतैर्द्वादशभि र्हुत्वा, स्विष्टकृदादिसंस्रावान्तं कृत्वा, अग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति । नमोअस्तु नीलग्रीवायेत्यृचा ॥

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः ॥

अथ—

परिषद्दक्षिणां दत्वा यथाशक्ति तथा बुधः ।
तत्कालसद्गुणार्थाय स्वनुज्ञाप्य ततश्चरेत् ॥

अथ शिष्यः 'सावित्र व्रतं करिष्य' इति सकल्प्य, पालाशीः चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीः अप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति ॥ याज्ञिकाना वा वृक्षाणामन्यतमस्य ॥

**अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता॒ स्वाहा** ॥ अग्नये व्रतपतय इदम् ॥ वायो व्रतपते सावित्रं, आदित्य व्रतपते सावित्रं, व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मेराध्यता॒ स्वाहा ॥ व्रतानां व्रतपातय इदम् ॥ इति ॥

॥ ब्रह्मोपदेशः ॥

अपरेणाग्निं उदगग्रं कूर्चं निधाय, तस्मिन् प्राङ्मुख आचार्यः उपविशति 'राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमि'ति ॥

तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य, पादावन्वारभ्याह सावित्रीं भो अनुब्रूहीति तस्मा अन्वाहाचार्य ओमिति प्रतिपद्यते ॥ प्राणानायम्य, प्रणवस्य गायत्र्याश्च ऋषिच्छन्दोदेवता उक्त्वा,

व्याहृतीश्च वाचयित्वा ब्रह्मोपदेशं कुर्यात्

'ओ भूः तत्सवितु र्वरेण्यम् ॥' 'ओ भुवः भर्गो देवस्य धीमहि ॥ ओ॰ सुवः धियो यो नः प्रचोदयात ॥ ओ भूः तत्सवितु र्वरेण्यं भर्गो देवस्य धीमहि ॥ ओ भुवः धियो यो नः प्रचोदयात्॥ ओ॰ सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात ॥ ओ भूर्भुवस्सुवः तत्सवितु र्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयात्' ॥ इत्यनवानम ॥ प्राणायामं वाचयेत् ॥ इति पादादिषु ॥

अन्तेषु वा इति पक्षे—'ओ तत्सवितुर्वरेण्य, ओ भूः' एव न्यायेन वा वदेत् । एवं प्रसिद्धः ॥

* प्रणवस्य गायत्र्याश्च ऋषिछन्दो देवता उपदिशति —

प्रणवस्य च गायत्र्या व्याहृतित्रितयस्य च ।
ऋषि छन्दश्च दैव च उपदिश्य ततो गुरु. ॥

प्रणवस्य ऋषिर्ब्रह्म देवी गायत्री छन्दः परमात्मा देवता ॥ भूरादि व्याहृतित्रयाणा अत्रिभृगु कुत्सा ऋषयः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्नि वायु सूर्या देवताः ॥ सावित्र्या ऋषिर्विश्वामित्रः निचृद्गायत्री छन्दः सविता देवता ॥

अथ आचार्यमभिवादयेत् ॥

प्रथमं ह्यजलिं कृत्वा ततः कर्णौ पिधाय च ।
पादौ कराभ्या स्पृष्ट्वाथ पुनश्चाजलिमाचरेत् ॥

गृह्णीयाद्दक्षिणं पादं दक्षिणेन करेण च ।
वाम वामेन गृह्णीयात् दक्षिणं बाहुमूर्ध्वतः ॥

अभिवादये प्रवर-गोत्र-सूत्र-शर्मा-नामाहमस्मिभोः— अभिवादये देवदत्त शर्मा नामाहं भो' इति वा अभिवादनम् ॥

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारस्तस्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

'प्लुत प्रगृह्या अची'ति व्याकरणसूत्रं ज्ञात्वा, प्रत्यभिवादयेत् ॥ प्रत्यभिवादनं - आयुष्मान् भव सौम्य देवदत्ता३-अ-महागणपता३य-महाविष्णा ३व एवमादि न्यायं विचार्य प्रत्यभिवादयेत् ॥

अथ कुमारः पक्वादुपादाय प्राश्नाति । शरीर + गोपायेति ॥

शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः ॥ श्रुतमे गोपाय ॥

प्राश्य, अप आचम्य, आदित्यमुपतिष्ठते । **'उद्वयं + त्तममिति'** ॥

उद्वयं तमस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम् ॥

अथ कुमारं शिक्षयेत् । ब्रह्मचार्यसि, अपोशान, कर्म कुरु, मा दिवासुषुप्थाः, समिध आधेहि, भैक्षाचर्य चर, सदारण्यात् समिध आहर, उदकुंभचाऽऽहर, आचार्याधीनो वेदमधीष्व इति । आचार्यः शिष्यं नवभिः शिक्षयेत् । नवाना प्रत्येक शिष्यः बाढमित्येवब्रूयात् ॥ समिधमुदकुंभं च आचार्याय गृहीत्वा दद्यादित्यर्थः॥ अथाचार्यः शिष्याय अरिक्तं पात्रं प्रयच्छन्नाह मातरमेवाग्रे भिक्षस्वेति । सः मातरमेवाग्रे भिक्षते। माता न यदि अप्रत्याख्यायिनी अग्रेभिक्षेत । भवति भिक्षा देहीति ब्राह्मणो भिक्षेत ॥ यथा लब्धं भिक्षाद्रव्य-माहृत्य आचार्याय प्राह-भैक्षमिदमिति । तत्सुभैक्षमित्याचार्यः प्रतिगृह्णाति ॥

उत्तरेणाग्निं द्वे स्त्रीप्रतिकृती कृत्वा-श्रद्धायै नमः। मेधायै नमः । आस-नादिभिरभ्यर्च्य, नैवेद्यं च, त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयित्वा श्रद्धामेधे प्रीयेतामिति पुण्याहम् । प्रीयेतां भगवत्यौ, श्रद्धामेधे इति प्रति वचनम् । देवते उद्वास्य परिषेचनादि समानम् ॥ त्र्यह मेतमग्निं धारयन्ति । क्षारलवणवर्जं अधश्शाय्याच एतस्मिन्नेवाऽग्नौ व्याहृतीभिः साय प्रातः समिधो ऽभ्यादध्यात् । एवमन्यस्मिन्नपि सदा ॥

चतुर्थदिवसे अग्न्युत्सर्जनपक्षे पश्चाल्लौकिकाग्नौ समिदाधानं कुर्यात् ॥

* अभिवादन्यायमाह—

ऊर्ध्वं प्राणा उत्क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥ इति॥

अथधर्मवचनं, दीर्घमायुः स्वर्गं चेप्सन् कममन्यस्मै साधुवृत्ताय गुरुणा अनुज्ञातः असावहं भो इति श्रोत्रे संस्पृश्य मनः समाधानार्थं अधस्ताज्जान्वोः आपद्भ्या दक्षिणं दक्षिणेन सव्यं सव्येन चोपगृह्णीयात् ॥

अथाभिवादननिषेधः ॥ प्रत्यभिवादनं वक्तुमशक्तश्चेत् तदा कथं—

अभिवादन चेष्टा तु कृत्वा तूष्णीं समाचरेत् ।
नमेदञ्जलिना यद्वा नमो नम इतीरितम् ॥

त्रिपूरुषाञ्च विप्राश्च नमो नम इतीरयेत् ॥

धर्मवचनं, नासीनो नासीनाय-न शयानो न शयानाय, नाप्रयतो नाप्रयताय, समिद्धारी उदकुम्भहस्तो नाभिवादयेत् । यच्चान्यदप्येवं युक्तं । न समवाये अभिवादनम् । ऋत्विक्श्वशुर पितृव्यमातुलाना यवीयसा प्रत्युत्थायाभिभाषणं प्रत्यभिवादनम् ॥ तथा नोपर्यासीनो नोपर्यासीनाय नाभ्यक्तो नाभ्यक्ताय नार्द्रवस्त्रो नार्द्रवस्त्राय न व्रजन् न व्रजते ॥

दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् ।
कोपा(रोगा)क्रान्तं मदोन्मत्तं षड्विप्रान्नाभिवादयेत् ॥

## एवमादि विचार्य कर्तव्यम् ॥

नवती ? घटिकायुक्तं त्र्यहः प्रवसेद्यदि ।
आगतं वा तथोत्थाय प्रकुर्यात् अभिवादनम् ॥

ऊर्ध्वं ज्यारन्तरा ? जान्वोरासीनं शिरसा सह ।
मातरं पितरं ज्येष्ठं आचार्यं गुरुमातुलौ ॥

मातामहं पितृव्यं च श्वशुरं चर्त्विजं तथा ।
उपाध्यायं तथा बन्धून् प्रणमेद्व वयोधिकान् ॥

पतिवयस स्त्रियःस्युर्भर्तृवत् प्रणमेद् बुधः ।
वयोधिकाना पत्नीना नमस्कारं वदेदिति ॥
मातरं जननी कुर्यात् साष्टाङ्गं चाभिवादनग् ।
मातुलादीनशेषाश्च नमस्कुर्याद्वयोधिकान् ॥

अथ माणवकस्य आपः पुनन्त्वग्निश्च सूर्यश्चेति वेदपाठनशान्माध्यंदिनमाचार्येण कर्तव्यम् ॥ यद्वा सायमुपक्रमः प्रातरपवर्ग इतिन्यायेन आचार्यस्तु सायमुपक्रम्य सन्ध्यावन्दनादिकं कारयित्वा पश्चात् प्रातस्सन्ध्यावन्दनं माध्यंदिन मुक्तकाले कारयेत् ॥

सायमारभ्य सन्ध्याद्यमाचार्यः कारयेच्छिशोः ।
सावित्री समिदाधानं भिक्षान्न भोजनक्रमम् ॥
ब्राह्मणान् भोजयेदत्र शिशोरायुष्यरिद्धये ।
शिशुः सन्ध्यादिमारभ्य पश्चादेवाचरेत्कृती (बुधः) ॥
मातरं गुरुपत्नी वाऽप्याद्यभिक्षा समाचरेत् ॥
एवं क्रमेण कुर्यात् ॥

अथ सायं सन्ध्यादिकं गायत्री जपं च वक्ष्यमाण प्रकारेण कृत्वा का(का)लानुगुण्यम् ॥

॥ **समिदाधानम्** ॥

ततः शिष्यः समिदाधानं करिष्य इति संकल्प्य ॥ जलेन प्रदक्षिण मग्निं परिसमूहति उपनयनाग्निमेव जुषस्व न इत्यृचा ॥

जुषस्व नः समिध मग्ने अद्य शोचा बृहद्यजतं धूम मृण्वन् ।
उपस्पृश दिव्यꣳ सा न स्तूपैः सꣳ रश्मिभि स्ततनः सूर्यस्य ॥

अथाग्नि परिषिञ्चति । अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनम् । अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम् । सरस्वतेऽनुमन्यस्वेति उत्तरतः प्राचीनम् ॥ देव सवितः प्रसुवेति समन्तं प्रदक्षिणम् ॥ समन्तमेव वा तूष्णीम् ॥

अथ पलाशाश्वत्थखादिरोदुम्बराणामेकतमाश्चतस्रः समिधोऽभ्यादधाति व्याहृतीभिश्चतसृभिः । अथाग्नि "जुषस्वन" इति परिसमूह्यान्वमंस्थाइत्याद्यैः परिषिच्याथाग्निमुपतिष्ठते यत्ते अग्न इति तिसृभिः मयि मेधामिति तिसृभिश्च ॥

यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत्ते अग्ने हर स्तेनाहꣳ हरस्वी भूयासम् ॥ मयि मेधां मयि प्रजां मय्यग्नि स्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

अथोपविश्य होमभस्म संगृह्य वामकरतले निक्षिप्य शन्नो देवीरित्यद्भिः सेचयित्वा अनामिकया मानस्तोक (121 पृष्ठे) इत्यृचाऽऽलोड्य क्रमेण धारयेत् सरस्वतीति शिरसि, मेधावीति ललाटे, तेजस्वीत्युरसि, वर्चस्वीति दक्षिण भुजे ब्रह्मवर्चसीति वामभुजे, आयुष्मानिति कण्ठे अन्नादो भूयासमिति पिठरे । स्वस्तीति पुनरपि शिरसि ॥*

* सर्वत्र भूयासमिति योजनीयम् ॥ भस्मरक्षाधारणे सम्प्रदायभेदो बहुधा वर्तते । बो-गृ-शेषसूत्रेऽप्युक्तं भवति ॥ यथाकुलाचारं व्यवस्था ॥

करं पात्रे प्रक्षाल्य अभिवाद्य कृष्णाऽनुस्मरणं कृत्वा *करचरणकृतं वेति जपित्वा तज्जलं गेहोपरिष्टान्निनयेत् ॥

एवं सायं प्रातरहरहः कुर्यात् । अकरणे दोषः। तथाविधधर्मो ब्रह्मचारी यां रात्रि समिधं नाऽऽहरति आयुष एव तामवदाय वसति । तस्माद्ब्रह्मचारी समिधमाहरेत् ॥ सायं सायं समिदाधानमित्येकः पक्षः। ब्रह्मचर्यं च कृत्वा भूतानि आब्रह्मचर्यं चरेत् ।**

अथोपनयन दिवसप्रभृति त्रिरात्रमक्षारलवण भोजनमधश्शयनं च कुर्यात् । न स्नाति धारित दण्डं न त्यजति, किञ्चित् स्पृष्ट्वा ह्यशुचिर्भवेद्यदि तदाचार्यः सुरभिमत्यादि*** पवमानान्तमन्त्रैः प्रोक्षयेत् ॥

## अथ उपनयनाद्यग्निनाश प्रायश्चित्तम्॥

अथ यद्युपनयनाग्निः विवाहाग्निः जातकाग्निः श्मशानाग्निः आचतुर्थादादशाहादासञ्चयनादुद्वातःस्यात्। तत्र अपहता असुरा इति मन्त्रेण भस्मप्रोक्ष्य ॥

अपहता असुरा रक्षाँसि पिशाचा ये क्षि(क्ष)यन्ति पृथिवीमनु ।

अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः ॥

*करचरणकृतं वा कर्म वाक्कायजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विदितमविदितं वा सर्वमेतत् क्षमस्व शिव शिव करुणाब्धे श्रीमहादेव शम्भो ॥

**ब्रह्मचर्यमुपयन् चतुर्धा भूतानि प्रविशति । अग्निं पदा मृत्युं पदा आचार्यं पदा आत्मन्येव चतुर्थः ॥ समिदाधानात्, आत्मानं दरिद्रीकृत्य अह्रीर्भूत्वा भिक्षणात् आचार्य वचः करणात्, वेदाध्ययनाच्च ॥ बो–धर्म ॥

***सुरभिमत्याऽब्लिङ्गाभिः वारुणीभिः हिरण्यवर्णाभिः पावमानीभिश्चाऽऽचार्यः अद्भिः प्रोक्षयेत् ॥

तद्भस्मसमारोपणं—अयं ते योनिर् ऋत्विय इति समिधि समारोप्य ॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तञ्जानन्नग्न आरोहाऽथा नो वर्धया रयिम् ॥

लौकिकाग्निमाहृत्य समिधमादधाति आजुह्वानः, उद्बुध्यस्वाग्न इति द्वाभ्याम् ॥

आजुह्वानः सुप्रतीकः पुरस्ता दग्ने स्वां योनि मासीदसाध्या ।
अस्मिन् थ्सधस्थे अध्युत्तरस्मि न्विश्वे देवा यजमानश्च सीदत ॥
उद्बुध्यस्वाग्ने प्रति जागृह्येन मिष्टापूर्ते स॒ृ सृजेथामयञ्च । पुनः
कृण्व॒ृ स्त्वा पितरं युवान मन्वाता॒ृसीत् त्वयि तन्तु मेतम् ॥

शुचौदेशे अग्निमाहृत्य संपरिस्तीर्य परिषेचनान्तं कृत्वा अलंकृत्य समिध माधाय नाना चतुर्गृहीतानि जुहोति—

अयाश्चाग्नेः अग्निर्होतानुवाकं ब्राह्मण एकहोता दशाहुतयः मनो ज्योतिः मिन्दाहुती द्वे महाव्याहृतयः चतस्रः व्याहृतयः चतस्रश्च एवं चतुर्विंशतिः चतुर्गृहीताः ॥ सर्वत्र स्रवाहुतीर्वा ॥

ओं भूर्भुवः सुवः स्वाहा । प्रजापतय इदम् ॥ अयाश्चाग्नेः— 31 पृष्ठे

अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता । सोमः

सोमस्य पुरोगाः । शुक्रः शुक्रस्य पुरोगाः । श्रातास्त इन्द्र सोमाः ।
वातापेर्हवन श्रुतस्स्वाहा । वाचस्पतये ब्रह्मण इदम् ॥

ब्राह्मण एकहोता । स यज्ञः । स मे ददातु प्रजां पशून् पुष्टिं
यशः । यज्ञश्च मे भूयात् स्वाहा ॥ यज्ञायेदम् ॥ ( ब्रह्मण इदम् )

अग्निर्द्विहोता । स भर्ता । स मे ददातु प्रजां पशून् पुष्टिं यशः ।
भर्ता च मे भूयात् स्वाहा ॥ अग्नय इदम् ॥

पृथिवी त्रिहोता । स प्रतिष्ठा । स मे ददातु प्रजां पशून् पुष्टिं
यशः । प्रतिष्ठा च मे भूयात्स्वाहा ॥ पृथिव्या इदम् ॥

अन्तरिक्षं चतुर्होता । स विष्ठाः । स मे ददातु प्रजां पशून् पुष्टिं
यशः । विष्ठाश्च मे भूयात् स्वाहा ॥ अन्तरिक्षायेदम् ॥

वायुः पञ्चहोता । स प्राणः । स मे ददातु प्रजां पशून् पुष्टिं
यशः । प्राणश्च मे भूयात् स्वाहा ॥ वायव इदम् ॥

चन्द्रमाः षड्ढोता । स ऋतून्कल्पयाति । स मे ददातु प्रजां पशून्पुष्टिं यशः । ऋतवश्च मे कल्पन्ता॑ᳲ स्वाहा ॥ चन्द्रमस इदम् ॥

अन्नᳲ सप्तहोता । स प्राणस्य प्राणः । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्राणस्य च मे प्राणो भूयात् स्वाहा ॥ अन्नायेदम् ॥

द्यौरष्टहोता । सोऽनाधृष्यः । स मे ददातु प्रजां पशून्पुष्टिं यशः । अनाधृष्यश्च भूयासᳲ स्वाहा ॥ दिव इदम् ॥

आदित्यो नवहोता । स तेजस्वी । स मे ददातु प्रजां पशून्पुष्टिं यशः । तेजस्वी च भूयासᳲस्वाहा ॥ आदित्यायेदम् ॥

प्रजापतिर्दशहोता । स इदᳲ सर्वम् । स मे ददातु प्रजां पशून् पुष्टिं यशः । सर्वं च मे भूयात्स्वाहा ॥ प्रजापतय इदम् ॥

मनो ज्योतिः 30 पृष्ठे

यन्म आत्मनः–पुनरग्निः– 31पृष्ठे । भूरग्नये च–भूवो वायवे च–

सुवरादित्याय-च भूर्भुवः सुवश्चन्द्रमसे च–33 पृष्ठे (एता महाव्याहृतय)

भूःस्वाहा प्रभृति चतस्रः–31 पृष्ठे ॥

व्रत विसर्जनात् पूर्वमग्नौ नष्टे एवं कुर्यात् ॥

चतुर्थेऽह्नि समिदाधानानन्तरं एतमग्निमादाय तां दिशं यन्ति यत्र पलाशः स्पष्टो भवति। तत्र गत्वा तत्पुरस्तादुत्तरतो वा उपलिप्य शिशुं स्नापयित्वा, अस्य माणवकस्य सावित्रव्रतोत्सर्जनं कारयिष्ये। सावित्र व्रतोत्सर्जनं करिष्य इति शिष्यः ॥ अथ पलाशं प्रदक्षिणं परिसमूहति जलैः सहशिष्यः सुश्रवः सुश्रवसं मा कुरु +भूयासमिति ॥

सुश्रवः सुश्रवसं मा कुरु यथा त्वꣳ सुश्रवः सुश्रवा अस्येवमहꣳ सुश्रवः सुश्रवा भूयासं यथा त्वꣳ सुश्रवः सुश्रवो देवाना निधिगोपोऽस्येव महं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम् ॥

तस्याग्रेणोत्तरेण वा अग्निमुपसमाधाय संपरिस्तीर्य, आज्यं संस्कृत्यस्रुक्स्रुवौ संमृज्य परिपिच्यालंकृत्य समिधमाधाय अथाव्रत्यप्रायश्चित्तं चतुर्गृहीतेन मिन्दाहुती द्वेच हुत्वा, अथ पाहिनो अग्न इति पञ्च व्याहृतीश्चतस्रश्च स्रुवेण हुत्वा ॥

## अत्र वा सङ्कल्पं कुर्यात् ॥

सावित्रव्रतोत्सर्जनं चरिष्यामीति माणवकः। अथ पालाशीश्चतस्रस्समिध +न्वाचयति। अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधिस्वाहा ॥

अग्नये व्रतपतय इदम् ॥ एवं वायो व्रतपते, आदित्य व्रतपते, व्रताना व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ व्रतानां व्रत पतय इदम् ॥

अथ सुश्रवसं अर्चयेत्–सुश्रवसे नमः । इत्यासनादिदीपान्तं कृत्वा ॥ अपूपादिभिः निवेद्य, अथ ब्राह्मणान् संपूज्य आशिषो वाचयेत् ॥ सुश्रवाः प्रीयतां इति पुण्याहम् ॥ पालाशमूले दण्डमजिनं मेखलां वासश्च विसृजेत् । प्रथमं वासो विसृजेत् ॥ आचार्यः यस्य ते प्रथम वास्यँ+सुजातमिति गृह्णीयात् ॥

यस्य ते प्रथम वास्यँ हराम स्तं त्वा विश्वे अनुमदन्तु देवाः । तं त्वा भ्रातरः सुवृधो वर्धमान मनु जायन्तां बहवः सुजातम् ॥

अन्यद्वस्त्रं नवं चेन्मन्त्रवद्धारयेत् ॥
उपवीतं न त्यजेत् । त्यजेदित्यन्यसूत्रकार आह ॥

अथ शिरसिल्ललाटे उरसि भुजयोः कण्ठे च (पिठरे च) सरस्वत्यादिभिः भस्मधारणं कृत्वा—

शिष्यं शिक्षयेत् । दण्डमजिनं मेखलां च धारयन् श्राद्ध सूतक मैथुन मधुमांसानि च वर्जयन् भैक्षाहारोऽधश्शायीचाऽऽचार्यस्य गृहं गत्वा अचार्याधीनः वेदमधीष्वेति ब्रूयात् ॥ बाढमिति शिष्य उच्चरेत् ॥ अथाऽग्निं परिषिच्य समिधमाधायोपतिष्ठते । एतमग्निं धारयेत्

समिदाधानार्थम् । जाताग्नि मथित्वा तस्मिन् कृतस्य च धारणं तस्मिन् अनुगते श्रोत्रियगृहादाहृत्य पञ्च स्रुवाहुतीः । ※कालातिक्रम समिदाधाने च तथा ॥

यद्वा एतमग्निमुत्सृजेत् । जातकाग्न्यभावे उत्सर्जनमन्त्रः—आयुर्दा अग्न इति जपेत् ॥ आयुर्दाः+दिमम ॥ 121 पृष्ठे ॥

तस्मिन्नग्नौ दीपं गृहीत्वा ब्राह्मणैः स्वस्तिवाचनमङ्गलवाद्यैः सहितः तत आरभ्य गृहपर्यन्तं दण्डाकारेण जलं सिक्त्वा गृहं गच्छेत् । तत्र आशीर्वादं कृत्वा ब्राह्मणान् भोजयेत् । कर्म सद्गुण आयुष्यं च भवति ॥

## ॥ उपनयन दीक्षा ॥

मातुरा प्रसवाच्चौलं पुत्राणां नैव कारयेत् ।
आगर्भपतनात्पत्युः आषाण्मासं विवाहिनाम् ॥

क्षुरकर्म न कुर्वीत चौलादूर्ध्वं ऋतुत्रयात् ( यम् ) ।
तथैवोपनयादूर्ध्वं उपाकर्म विना क्वचित् ॥

किञ्च—मौञ्जीबन्धे विवाहे च षाण्मासं वर्षमेव वा न कुर्यात् ॥

मातृ पितृ व्यतिरिक्तानां स एव कर्ता चेत् षण्मासान्त क्षौरं न कुर्यात् ॥ पित्रो स्तु कुर्यादेव । एतद्व्यतिरिक्तं सर्वं कुर्यादेव । उभयत्र स एव कर्ता चेत् सपिण्डन च कुर्यात् ॥

## ॥ उपाकर्म विधिरुच्यते ॥

अत्र बोधायनः—

**हुतानुकृतिरुपाकर्म ॥**

श्रावण्या पौर्णमास्यां क्रियेताऽपि वाऽऽषाढ्याम ॥

※ सङ्कल्प्य, अग्निमुपसमाधाय चतुष्पात्र प्रयोगः । पाहिनो अग्न इत्यादिभिः पञ्चभिर्मन्त्रैः पुरस्तादुपरिष्टाच्च चतुर्भि र्व्याहृतीभिश्च स्रुवाहुतीर्जुहुयात् ॥

अथ स्मृतिवचनानि—

*अध्यायानामुपाकर्म श्रावण्या तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि ॥

असिंहार्के प्रोष्ठपद्या श्रवणेन व्यवस्थया ।
सहस्तशुक्लपञ्चम्या वा न तद्ग्रहसंक्रमे ॥

पर्वण्यौदयिके कुर्युः श्रावण्या तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः हस्तर्क्षे सामवेदिन. ॥

आषाढे श्रावणे मासि प्रोष्ठपद्यामथापि वा ।
तेषा तु पौर्णमास्या वा वासवर्क्षे समागते ॥

उपाकर्म स्वगृह्योक्तकाले दोषविवर्जिते ।
वेदोपाकरणं कुर्यु कुर्युः? वेदविघातुकाः ॥

पुष्योत्तरार्धात्पञ्चर्क्षयुक्तेऽर्के स्यादुपाकृतिः ।
उत्तरार्धकरे भानौ केचिदाहुः मनीषिणः ॥

मघाभाग्ययुते भानौ उत्तमा स्यादुपाकृतिः ।
गर्हिता सर्प नक्षत्रे पु ये मध्यमतः स्मृता ॥

श्रावण्या श्रवणर्क्षे वा कर्तव्यं वासवेऽथवा ।
वारुणे प्रोष्ठपन्मासि पौर्णमास्यामुपाकृतिः ॥

*प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजै ।
क्रियते छन्दसा तेन पुनराप्यायनं भवेत् ॥

अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानै रपि सदा तत्तेषा सिद्धिकारणम् ॥

उभयोर्मासिसिंहार्के पञ्चम्यां श्रवणे तथा? ।
कृत्वा व्रतं वार्षिकादौ वेदांश्चैव समारभेत् ॥

इत्यादिवचनैः सिंहेऽर्के उपाकर्म प्रथमोपाकृति च कुर्यात ॥

अत्र विशेषः–

सौर चान्द्रनभसोस्तु पूर्णिमा
विश्व विष्णु वसुभेषु संयुता ।

शस्यते यजुरुपाकृतिर्न चेत्
वारुणत्रिभयुत नभस्ययोः ॥

श्रावणे श्रवणमूचिरे पुनः
पञ्चमी सहितहस्तमप्यृचाम् ।

उक्तकाल उपराग संक्रमे
ग्राह्य एव पर गृह्यचोदितः ॥

निषिद्धकालमाह—*

श्रवणर्क्षे ऋचां हस्ते पञ्चमीसहितेऽपि च । (वा)
पूर्णाया यजुषा साम्ना दर्शे हस्तेऽथ वैष्णवे ॥

हस्ते च श्रावणाद्येषु बुधवारयुते दिने ।
अथर्वणां तथा तत्तत् वेदाधीते(शे)प्रकाशिते ॥

वेदोपाकरणं कुर्यात् ग्रहसंक्रान्ति वर्जिते ।
अर्धरात्रादधस्ताच्चेत् संक्रान्तौ ग्रहणेऽपिवा ॥

* ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी । उभौ हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे ॥

उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ।
द्राह्यायनमतेनापि मैनमस्तु मतेन वा ॥ [जैमिने]

ससर्पाहस्पतीमासे ऽयधिमासे तथैव च ।
शुक्रेचास्तं गते जीवे बाल्ये वा वार्धकेऽपिवा ॥

तद्दोषाय भवेन्नित्यं उपाकरणसंज्ञितम् ।
ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः ॥

सामवेदाधिपो भौमः शनिश्चाथर्ववेदराट् ।
एवं स्वशाखाधीशप्रबल काले कर्तव्यम् ॥

**मासत्रये दोषयुक्ते सति तत्राह—**

मासत्रयेऽपिदुष्टेतु श्रावण्यामेव कारयेत् ।
श्रावणी दोषयुक्ता स्यात् स्वस्वगृह्योक्तकालतः ॥

तत्तत्काले सदोषे तु परगृह्योक्तकालतः ।
यत्र कुत्राप्युपाकर्म नित्यकर्म समाचरेत् ॥

मासत्रये दोषयुक्ते श्रावण्यामेव कारयेत् ।

स्वशाखाधीशे बलवति सति तस्मिन् काले कर्तव्यम् । दुर्बले सति आषाढया वा स्वस्वगृह्योक्तकाले कर्तव्यम् । कालत्रये दुष्टे सति सौरनभस्य पौर्णमास्यां वा कर्तव्यम् । अन्येषा च श्रवणादिकाले । बोधायनीयाना आषाढया विशेषतः । अन्येषा भाद्रपद्या विशेषतः । सर्वेषा श्रावण्यामेव सिंहार्क युक्तायां च विशेषतः

वेदेषु नित्यमेवं स्यात् श्रावणं नित्यमेव च ।
तस्मात् सर्वप्रयत्नेन कर्तव्यं वेदपारगैः ॥

तथाह आपस्तम्बः—

श्रावण्यां तिलभक्ष उपोष्य वा श्वोभूते महानदमुदकमुपस्पृश्य सावित्र्या सहस्रकृत्वः समिधो जुहुयात् । जपेद्वा ॥ प्रथमोपाकृते निषेधः ॥

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपिवा ।
तथाधिमास ससर्प मलमासादिषु द्विजः ॥
प्रथमोपाकृतिर्न स्यात् यदि कुर्याद्विनश्यति ।
अध्यायाङ्गमिदं नित्यमिति होवाच भार्गवः ॥ इति वचनात् ॥

श्रावण्या वा आषाढ्यां वा सिंहार्कपौर्णमास्या वा बोधायनीयाना प्रथमोपाकृतेः कालः । अन्येषा श्रावण्या सिंहार्कपौर्णमास्यां प्रथमोपाकर्म कालः ।

श्रावण्यां वाथ सिंहार्के कालदोषयुते सति ।
प्रथमोपाकृतिर्न स्यात् अपराब्दे समाचरेत् ॥
उभयोर्मासयोः सिंहार्कमासे प्रथमोपाकृतिः कर्तव्या ।

अथ तत्कालः––

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदात्वौदयिकी कुर्यात् नचेत्पूर्वेद्युरेव च ॥

सन्धिः सङ्गवतः पश्चादर्वाङमध्यन्दिनाद्यदि ।
तस्मिन्नुपाकृति कुर्यात् सद्यश्च समिदाहुतिः ॥
यदा मध्यंदिनादर्वाक् पूर्वस्मिन् पर्वणि क्रिया ।
श्वोभूते समिदाधान एष.श्रावणिको विधिः ॥
श्वोभूत इति प्रातः पर्वणिभागे समिदाधानं कर्तव्यम् ।

अथ आश्वयुज्यामपि कर्तव्यमित्याह—

जराग्नियुक्ते नृपतेः विनाशे
जाते मृते राष्ट्र समाकुले च ।
उत्सर्जनोपक्रमणं न कुर्यात्
ग्रस्तेऽर्के चन्द्रे गुरुशुक्रमौढ्ये ॥

आषाढादित्रये मासे दैवाद्विघ्न उपागते ।
कुर्यादाश्वयुजे मासे पौर्णमास्यादिषु द्विजः ॥

एवमाषाढादित्रये मासे दैवादकृते सति आश्वयुज्या
पौर्णमास्या श्रवणादिषु यथासूत्रन्याय कुर्यात ॥

## ॥ अथ उपाकर्म वपनादि विधिः ॥

अध्यायानामुपाकर्म वेदाङ्गानि व्रतानि च ।
वापयित्वा चरेद्वर्णी तदुत्सर्गेषु नाचरेत् ॥

उपायनस्य दीक्षायामुपाकर्म भवेद्यदि ।
वापयित्वा चरेद्वर्णी पुनर्दीक्षान्तथाचरेत् ॥

पित्रोर्दीक्षान्तरा वापि वपनं धारणं तथा ।
ब्रह्मचर्याविरोधेन दीक्षादि ब्रह्मचारिणः ॥

अथाचार्यः सशिष्यो मध्याह्ने महानद्या देवखाते वा नित्यकर्म कृत्वा श्रावण्यां पौर्णमास्यां उपाकर्मस्नानं करिष्य इति संकल्प्य, स्नात्वा आर्द्रवस्त्रं परित्यज्य शुभ्रवस्त्र परिधाय यज्ञोपवीत -संधार्य—"ब्रह्मचारिणस्तु मौञ्जी अजिनं दण्ड च धारयेयुः" । श्रावण्या पौर्णमास्यां उपाकर्मतर्पण करिष्य इति संकल्प्य उपवीती अक्षतयुक्ताद्भिः तर्पयति अङ्गुलिमुखेन ऊर्ध्वं नाभेः हृदयस्याधस्तात् हस्ताभ्यां प्रतितर्पणं त्रिः त्रिः कुर्यात् ।

याज्ञिकीर्देवता स्तर्पयामि । सा॑हितीर्देवतास्तर्पयामि । वारुणीर्देव तास्तर्पयामि । सर्वादेवताः तर्पयापि । इति द्वादशतर्पणानि कृत्वा ॥

अथ निवीती उपवीतमङ्गुष्ठाभ्यां परिगृह्य ऊर्ध्वं नाभेः हृदयस्याधस्तात् अङ्गुल्यग्रैः तिलाक्षतयुक्ताद्भिः तर्पयति ।

प्रजापतिकाण्डऋषि तर्पयामि । सोमं कण्डऋषि तर्पयामि । अग्निं काण्डऋषि तर्पयामि । विश्वान् देवान्काण्डऋषीꣳस्तर्पयामि ॥ स्वयंभुवं काण्डऋषि तर्पयामि । इति पञ्चदश तर्पणानि च कुर्यात् ॥

अथ प्राचीनावीती अंगुष्ठाग्रेण अंगुष्ठतर्जनीमध्येन वा तिलैः तर्पयेत् । पितॄन् स्वधानमः तर्पयायि । पितामहान् स्वधानमस्तर्पयामि । प्रपितामहान् स्वधानमस्तर्पयामि । मातॄः स्वधा नमस्तर्पयामि । पितामहीः स्वधा नमस्तर्पयामि । प्रपितामहीः स्वधा नमस्तर्पयामि । मातामहान् स्वधानमस्तर्पयामि । मातुः पितामहान् स्वधा नमस्तर्पयामि । मातुः प्रपितामहान् स्वधा नमस्तर्पयामि । मातामहीः स्वधा नमस्तर्पयामि । मातुः पितामहीः स्वधा नमस्तर्पयामि । मातुः प्रपितामहीः स्वधा नमस्तर्पयामि ।

आचार्यान् स्वधा, आचार्यपत्नी स्स्वधा, गुरून् स्वधा, गुरुपत्नी स्स्वधा, सखीन् स्वधा, सखिपत्नीः स्वधा, ज्ञातीन् स्वधा- ज्ञातिपत्नीः स्वधा, अमात्यान् स्वधा, अमात्यपत्नीः स्वधा, सर्वान् स्वधा, सर्वाःस्वधा नमस्तर्पयामि ॥ इति चतुर्विंशतितर्पणानि प्रत्येक त्रिः त्रि कुर्यात् । जीवपितृकस्तु न कुर्यात् ॥

अथ स्मृति वचनम् ॥

अध्यायानामुपाकर्म होमात्पूर्व नदीतटे ।
देवानृषीन् पितॄन् ध्यात्वा तर्पयेद्गुरुपूर्वतः ॥

अक्षतैः तर्पयेद्देवान् ऋषीनेव तिलाक्षतैः ।
पितॄन् कृष्णतिलैरत्र दोषयुक्तेऽक्षतैस्सह ॥

अर्कशुक्रार्किभौमेषु त्रयोदश्यां च सन्ध्ययोः ।
द्वादश्यां च निशाया च न दद्यात्तिलतर्पणम् ॥

साक्षतं चेन्न दोषाय यद्वा दर्भयुतं चरेत् ।
तर्पणानि च सर्वाणि त्रिस्त्रिर्नैमित्तिकानि तु ॥

एवं तर्पणानि कुर्यात् । केचित्तिलतर्पणं कुर्वन्ति ॥ केचित् न कुर्वन्ति ॥ अत्र पितृतर्पणं सूत्रकारेण नोक्तम् । अन्य सूत्रकारः स्मृतिकारश्चवदति ॥

सशिष्य. उपाध्यायः नदीतीरे मठे वा आचार्यगृहे वा होमं कुर्यात् । नान्दीमुखं केचित्कुर्वन्ति —

श्रावण्या पौर्णमास्या एभिश्छात्रैस्सह अध्यायोपाकरणहोमं करिष्ये । तदङ्गं सविता प्रीयतामिति पुण्याहम् ॥ केचिदौपासने कुर्वन्ति ।

बोधायनीयाना श्रोत्रियागारा द्व्याहुत्या एकाहुत्या प्रतिसन्धानं, पुनस्त्वा-दित्या [34पृष्ठे] इत्यचा चतुर्गृहीतेन हुत्वा तस्मिन्नग्नौ कुर्वन्ति । अग्निमुपसमाधाय अग्निमुखान्त कृत्वा सावित्र्या पक्वं छात्रैरन्वारब्धो जुहुयादाचार्यः । स्विष्टकृतमव दाय निधायाज्याहुती रुपजुहोति । याज्ञिकीभ्यो देवताभ्यः स्वाहा इत्यादि चतस्रः—

यज्ञिकीभ्यो देवताभ्यः स्वाहा ।
याज्ञिकीभ्यो देवताभ्य इदम् ॥

सा॒ꣳहितीभ्यो देवताभ्यः स्वाहा ।
सा॒ꣳहितीभ्यो देवताभ्य इदम् ॥

वारुणीभ्यो देवताभ्यः स्वाहा ।
वारुणीभ्यो देवताभ्य इदम् ॥

सर्वाभ्यो देवताभ्यः स्वाहा ।
सर्वाभ्यो देवताभ्य इदम् ॥

प्रजापतये काण्डऋषये स्वाहा । इति पञ्च ।

प्रजजापतये काण्डऋषये स्वाहा ।

प्रजापतये काण्डऋषय इदम् ॥

सोमायकाण्डऋषये स्वाहा ।

सोमाय काण्डऋषय इदम् ॥

अग्नये काण्डऋपये स्वाहा ।

अग्नये काण्ऋषय इदम् ॥

विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ।

विश्वेभ्यो देवेभ्यः काण्डऋषिभ्य इदम् ॥

स्वयंभुवे काण्डऋषये स्वाहा ।

स्वयंभुवे काण्डऋषय इदम् ॥

सदसस्पति मित्यादि दश

सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधा मयासिष७

स्वाहा । सदसस्पतय इदम् ॥

तथ्सवितुर्वरेण्यं + प्रचोदयात् स्वाहा । सवित्र इदम् ।

ऋग्वेदाय स्वाहा ।

ऋग्वेदायेदम् ॥

यजुर्वेदाय स्वाहा ।

यजुर्वेदायेदम् ॥

सामवेदाय स्वाहा ।

सामवेदायेदम् ॥

अथर्ववेदाय स्वाहा ।

अथर्ववेदायेदम् ॥

अथर्वाङ्गिरोभ्यः स्वाहा ।

अथर्वाङ्गिरोभ्य इदम् ॥

इतिहास पुराणेभ्यः स्वाहा ।

इतिहास पुराणेभ्य इदम् ॥

सर्पदेवजनेभ्यः स्वाहा ।

सर्पदेवजनेभ्य इदम् ॥

सर्वभूतेभ्यः स्वाहा ।

सर्वभूतेभ्य इदम् ॥

एवमेकोनविंशतिः उपहोमाः। अथ उपाध्यायः वेदमधीयीत । इषेत्वेत्यनुवाकत्रयं षडङ्गं अधीयीरन् । आमावास्येन वा + कल्पयते ॥

इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा गा वः स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥

यज्ञस्य घोषदसि॰ प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा

बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ताद्दे
वेभ्यो जुष्टमिह बर्हिरासदे देवाना परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा
त्वाऽन्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मा रिषं देवबर्हि. शतवल्श
वि रोह सहस्रवल्शाः (२) वि वय५ रुहेम पृथिव्याः सपृत्र पाहि
सुसंभृता त्वा सं भराम्यदित्यै रास्नासीन्द्राण्यै संन्नहनं पूषा ते ग्रन्थि
ग्रथ्नातु स ते माऽऽस्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना
हराम्युर्वन्तरिक्षमन्विहि देवंगममसि ॥ २ ॥

शुन्धध्व दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि
पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृ४हस्व माह्वार्वसूना
पवित्रमसि शतधारं वसूना पवित्रमसि सहस्रधार॰हुतः स्तोको हुतो
द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्या॰सा विश्वायुः सा
विश्वव्यचाः सा विश्वकर्मा सं पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा

धनस्य सातये सोमेन त्वाऽऽ तनच्मीन्द्राय दधि विष्णो हव्यं रक्षस्व

॥ ३ ॥ *

आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति स पुरस्तादेव हविरातञ्चन मुपकल्पयते ॥

यथो एतद्धुत + पाक यज्ञसंस्था इति

यथो एतत् हुतः प्रहुत आहुतः शूलगवो बलिहरण प्रत्यवरोहण मष्टकाहोम इति सप्त पाकयज्ञसंस्था इति ॥

उपदिष्टो धर्मः + शिष्टागमः

उपदिष्टो धर्मः प्रतिवेदं तस्यानु व्याख्यास्यामः स्मार्तो द्वितीयः तृतीयः शिष्टागमः ॥

शीक्षा व्याख्यास्याम इत्यनुवाकं

शीक्षां व्याख्यास्यामः । वर्णःस्वरः। मात्रा बलम् । साम सन्तानः ।

इत्युक्तः शीक्षाध्यायः ॥

ओ अ इ उण् + हल्

अ इ उण् । ऋ लृक् । ए ओङ् । ऐ औच् । ह य व र ट् । लण् । ञ म ङ ण नम् । झ भञ् । घ ढ धष् । ज ब ग ड दश् । ख फ छ ठ थ

* वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः ॥

यज्ञाना तपसा चैव शुभाना चैव कर्मणाम् । वेद एव द्विजातीना निश्श्रेयसकरः परः ॥ यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् ॥

च ट त व् । क प य् । श ष स र् । हल् । इति माहेश्वराणि सूत्राणि । वृद्धि रादैच् । अदेङ्गुण ॥

ओं गीर्णश्रेयः

गीर्ण श्रेयः । धेनवः श्रीः । रुद्रस्तु नम्यः । भगोहि याज्या । धन्येय नारी । धनवान्पुत्रः ॥

अग्निमीळे - अग्न आ याहि - शन्नो देवीः ॥

होमस्य श्रवः पुराणादि तपः स्वाध्यायनिरतम् ॥ नारायणं नमस्कृत्य ॥ अथातो धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा ॥ ओ एवमध्याप्य, स्विष्टकृदादि समाप्य ॥ ओ नमो ब्रह्मणे + करोमि ॥ त्रिः ॥ (70)

अध्येतॄन् अपूपैर्धानाभिः सक्तुभिः ओदनैः धृतेन फलैर्लाजादिभि ब्राह्मणान् भोजयेत् । सर्वेऽपि हुतशेषं प्राश्याचम्याचार्य सपूज्य गृहं ययुः ॥

सर्वेऽपि उपोष्य वा तिलं वा हविष्यं वा भक्षयेयुः ॥

## ॥ गायत्रीजप विधिः ॥

श्वो भूते महानद्या स्नानादि कृत्वा गायत्रीमष्टोत्तरशतं जपित्वा नित्यसमिदाधानौपासनाग्नि होत्रादिक यथान्याय कृत्वा मिथ्याधीत प्रायश्चित्तार्थं गायत्रीमष्टोत्तरसहस्रकृत्वः जपेत ॥

ब्रह्मचारिणस्तु गायत्र्या समिदाधानं कुर्युः । तदशक्तो जपेत् ॥

प्रथमोपाकरणे अवश्यं समिदाधानमेव कुर्यात ॥ तदाह — गायत्र्या समिदाधान ब्रह्मचारी समाचरेत् । तदशक्तो जपेद्वापि प्रथमोपाकृति विना ॥ अनधीतभृषावाद नित्यानुष्ठानलोपतः । प्रायश्चित्तमुपाकृत्य प्रति चाब्द परेहनि ॥ महानदीजले स्नात्वा गायत्र्याष्टसहस्रकम् । समिद्धोमं जपं वापि कृत्वा शुद्धो भवेद्द्विजः ॥ प्रतिमाम तु पूर्णाया व्रतीभूत्वा परेऽहनि ॥ तथा जपेच्च गायत्री

महापातकनाशिनी ॥ समिदाधान पक्षे उल्लेखनादि कृत्वा लौकिकाग्निमुपसमाधाय परिस्तरणान्तं कृत्वा प्रोक्षणी संस्कृत्याज्यं संस्कृत्य स्रुव निष्टप्य संमृज्याग्नि परिषिच्याऽलंकृत्य समिध माधाय आज्येन व्याहृतीर्हुत्वा ॥

ततः मम समस्त पापक्षयार्थं अनधीत मिथ्याधीत संवत्सरप्रायश्चित्तार्थं अष्टोत्तर सहस्र गायत्र्या समिदाधानं करिष्य, इति संकल्प्य आज्येन पयसा वाऽभ्यज्य समित्सहस्रं गायत्र्या जुहुयात्। अन्ते व्याहृतीर्हुत्वा परिषिच्य गायत्रीमुद्वास्याग्निमुपस्थायानन्तरं नित्यकर्माचरेत् ॥

## ॥ अथ विद्यारंभ कर्मोच्यते ॥

श्रुतिस्मृति समारंभ तिथिवारर्क्षशोभने ।
वार्णा विघ्नेश्वरं प्राथ्यं गुरुः शिष्यस्य कारयेत् ॥

कुमारस्य विद्यारम्भ काले सरस्वतीमर्चयेत्। पूर्वपक्षे देव नक्षत्रे लौकिकाग्नौ कार्यम्। सरस्वती प्रीयतामिति पुण्याहम्। आपरिधानात्कृत्वा

अग्रेणाग्नि सरस्वतीमावाहयेत्। तण्डुलराशौ सपवित्रे

आयातु वरदा देवी अक्षर ब्रह्म सम्मितम् । गायत्री छन्दसा मातेद ब्रह्म जुषस्व नः ॥ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवाना धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुः अभिभूरो सरस्वतीमावाहयामीति आसनं कल्पयति वाग्देव्यैकल्पयामि, गीर्देव्यैकल्पयामि, सरस्वत्यै कल्पयामि, ब्राह्मयै कल्पयामि इति चतुर्भिः। पाद्यादि तथा कृत्वा

अद्भि र्मार्जयति, आपोहिष्ठादिभि [7 पृष्ठे] हिरण्यवर्णाभिः पावमानीभिश्च [8 पृष्ठे] अथतर्पयति - वाग्देवीं तर्पयामि, गीर्देवीं तर्पयामि, सरस्वतीं तर्पयामि ब्राह्मीं तर्पयामि, इति तर्पयित्वा । वाग्देव्यै नम इत्यादि चतुर्भिः गन्धादिभिरभ्यर्च्य

परिधान प्रभृत्याग्निमुखात्कृत्वा—

पक्वाज्जुहोति । अत्र पायस चरुः । चोदयित्री सूनृतानां पावीरवीकन्येति द्वाभ्याम् ॥

चोदयित्री सूनृताना चेतन्ती सुमतीनाम् । यज्ञ दधे सरस्वतो३म्
पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धिय धात् । ग्नाभि रच्छिद्र
शरण सजोषा दुराधर्षं गृणते शर्म य सत् स्वाहा ॥ सरस्वत्या
इदम् ॥

अथ उपहोमाः– प्रणो देवी, आनोदिवो बृहतः, येते सरस्व ऊर्मयः, उतनः प्रिया प्रियासु, इमाजुह्वाना, यस्तेस्तनः, देवीं वाचमजनयन्त, यद्वाग्वदन्ती इति वाक्सूक्तेन—

1 प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु स्वाहा ।
सरस्वत्या इदम् ॥

2 आ नो दिवो बृहतः पर्वता दा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मा न्नो वाच मुशती शृणोतु स्वाहा ।
सरस्वत्या इदम् ॥

3 ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्न मीमहे
स्वाहा । सरस्वत्या इदम् ॥

4 उत नः प्रिया प्रियासु । सप्त स्वसा सुजुष्टा । सरस्वती स्तोम्या ऽभूत्स्वाहा । सरस्वत्या इदम् ॥

5 इमा जुह्वाना युष्मदा नमोभिः । प्रति स्तोमꣳ सरस्वति जुषस्व । तव शर्मन् प्रियतमे दधानाः । उप स्थेयाम शरणं न वृक्षꣳ स्वाहा । सरस्वत्या इदम् ॥

6 यस्ते स्तनः शशयो यो मयोभूः । येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः । सरस्वति त मिह धातवे कःस्वाहा । सरस्वत्या इदम् ॥

7 देवीं वाच मजनयन्त देवाः । ता विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेष मूर्ज दुहाना । धेनु र्वागस्मा नुप सुष्टुतैतु स्वाहा । सरस्वत्या इदम् ॥

8 यद्वाग्वदन्त्यविचेतनानि । राष्ट्री देवानां नि षसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयाꣳसि । क स्विदस्याः परमं जगाम स्वाहा । सरस्वत्या इदम् ॥

स्विष्टकृदादि संस्रावान्तं कृत्वा

अग्रेणाग्निं पलाशपर्णेषु देवस्यत्वेति हुतशेषं निवेद्य बाह्यबलिं दत्वा

अपरेणाग्निं प्राङ्मुखं कुमारमुपवेश्य विद्यारंभं कुर्यात् । अथदेवीमुद्वासयेत् । उत्तमे शिखरे देवि + सुखम् ॥

उत्तमे शिखरे देवि भूम्या पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् ॥

परिषेचनादिसमानम् ॥ बहून् शिष्यान् विद्यारंभं कारयेत् ॥ एवं कृते विद्वान् भवेत् ॥

## ॥ ब्रह्मचर्यव्रतभङ्गप्रायश्चित्तम् ॥

यज्ञोपवीत मौञ्जी कृष्णाजिन दण्ड कमण्डलु वस्त्राद्यधारणे सन्ध्याग्निकार्य स्वाध्याय भिक्षाचरणलोपे गुरुशुश्रूषोदकुंभ लोपे च अन्येषु अनाम्नातेषु प्रायश्चित्तम् ॥ अग्निमुपसमाधाय संपरिस्तीर्य आज्यसंस्कारान्तं कृत्वा पाहि नो अग्न एनसे स्वाहेति [34 पृष्ठ] पञ्च स्रुवाहुतीर्जुहुयात् ॥

यावद्व्रतफलं भवति । सर्वत्राव्रत्यप्रायश्चित्तं ब्रह्मचारी मिन्दाहुती च [31 पृष्ठे] जहुयात् ॥

पूर्वोक्त प्रायश्चित्त निमित्तानि दीर्घकालकृतानि चेत् ब्राह्मणैरनुज्ञातः सावित्र्या शतकृत्वः घृतमभिमन्त्र्य प्राश्य कृत प्रायश्चित्तो भवति ॥ यद्वा गुरोः उच्छिष्टं भुञ्जीत ॥

आचार्योपाध्याय गुरुव्यतिरिक्तशवकर्म न कुर्यात् । कुर्वन् एवमाहुतीश्च घृतप्राशनं च कुर्यात् ॥

पातकं विना महापाप प्रायश्चित्तार्थमेवं कुर्यात् ॥

पुरुषाद्यमेध्य प्राशने तु पञ्चगव्यं विधिवत्कृतं प्राश्य एव प्रायश्चित्तं कुर्यात् । प्रायश्चित्तानंतरं तु हंसश्शुचिषदित्यृचाऽऽदित्यमुपतिष्ठते ।

हꣳसः शुचिष द्वसु रन्तरिक्षस द्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतस द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

अघमर्षण स्नानं च वक्ष्यमाण प्रकारेण कुर्यात् ।*
तथा मृत्तिकास्नानं च । द्रुपदगायत्र्या स्नानं च कुर्यात् ॥

## ॥ अवकीर्णिप्रायश्चित्तम् ॥

ब्रह्मचारी मैथुनं कुर्याच्चेत् सोऽवकीर्णी । यो ब्रह्मचार्यवकिरेत् अमावास्याया रात्र्या अग्निं प्रणीयोपसमाधाय-आपूर्विकविधिना आज्यसंस्कारांतं कृत्वा चतुर्गृहीते द्वे आज्याहुती जुहोति ।

कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा ॥ कामाभिद्रुग्धो
ऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहा ॥

उत्थाय प्रयताञ्जलिः तिर्यङ्मुख उपतिष्ठते-संमासिंचन्तु + आयुष्मन्तं करोत मा इति त्रिरुक्त्वा

स मा सिंचन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं माऽयमग्निः
सिंचत्वायुषा च बलेन चाऽऽयुष्मन्तं करोत मा ॥

* उपलब्धेषु कोशेषु अघमर्षण स्नानविधिः मृत्तिका स्नानविधिश्च न स्तः । अतः सहृदयैः बोधायन गृह्य शेषसूत्रे चतुर्थाध्याये उक्तमनुसृत्य कार्यम् ।

वरं दत्वा कृतप्रायश्चित्तो भवति ॥

योऽपूत इत्यात्मानं मन्येत स इत्थं जहुयात् । इत्थं अभिमन्त्रयते । वरं च दद्यात् ॥

महाव्रतारम्भात् पूर्वं प्रायश्चित्तार्थं ब्राह्मणैरनुज्ञातः अव्रत्य प्रायश्चित्तं एकादश स्रुवाहुतीः पाहिन इत्यादिभिः कुर्यात् ॥

मातापित्रोर्गुरो र्भ्रातुः सपिण्डानां परत्र च ।
जनने मरणे चैव नाशौचन्नोदकक्रिया ॥
न वापनं स कर्ता चेत् क्षौरं पिण्डोदकक्रियाम् ।
कृत्वा स्नात्वा शुचिर्वर्णी भिक्षान्नं प्राशयेत्सुधीः ॥

## ॥ होतृव्रतम् ॥

ब्रह्मचारी तु वपनं कुर्यादेव व्रतेष्वपि ।
उपाकर्मणि चारंभे कृत्वा कर्म समाचरेत् ॥

इतिस्मृतिवचनम्——सूत्रोक्तं शुक्रिये वपनम् ॥

यद्वा तत्तत्कालाकरणपक्षे होतृ व्रतकर्माङ्ग पुण्याहानन्तरं सर्वव्रताङ्ग वपनकृत्यं चरेत् ॥

व्रतान्याचार्य कृत्यानि । पूर्वेद्यः नान्दीमुखं कृत्वा आश्वयुजं महादेव-शर्माणं कुमारं होतृव्रतकर्मणा संस्करिष्ये । सविता प्रीयतामिति पुण्याहं । वपनं स्नानादिकं च कृत्वा ॥

मौञ्जीदण्डोपवीतानि वासः कृष्णाजिनं तथा ।
पूर्वोपयुक्तान्युत्सृज्य धार्याणि स्युर्व्रतेव्रते ॥

एव मन्त्रवद्धार्य उल्लेखनादि अग्निमुखान्ते अव्रत्य प्रायश्चित्त मिन्द्राहुती जुहोति ॥ सावित्र्या पक्वहोमः ॥ अथ उपहोमाः

याज्ञिकीभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥

याज्ञिकीभ्यो देवताभ्यो होतृभ्य इदम् ॥

साँहितीभ्यो देवताभ्यो होतृभ्यः स्वाहा।

साँहितीभ्यो देव + इदम् ॥

वारुणीभ्यो देवताभ्यो होतृभ्यः स्वाहा।

वारुणीभ्यो देव + इदम् ॥

सर्वाभ्यो देवताभ्यो होतृभ्यः स्वाहा

सर्वाभ्यो देव + इदम् ॥ इति चतस्रः ॥

अथकाण्डऋषिं जुहोति-प्रजापतये काण्डऋषये स्वाहा।

प्रजापतये काण्डऋषय इदम् ॥

सदसस्पतिमद्भुत प्रिय मिन्द्रस्य काम्यम्। सानि मेधा

मयासिषँस्वाहा। सदसस्पतय इदम् ॥

तत्सवितुः + दयात्स्वाहा सवित्र इदम् ॥

[सावित्रीहोमेषु सर्वत्र देवाय सवित्र इद इति केचित् ]

ऋग्वेदाय स्वाहा।

ऋग्वेदायेदम् ॥

यजुर्वेदाय स्वाहा।

यजुर्वेदायेदम् ॥

सामवेदाय स्वाहा ।

सामवेदायेदम् ॥

अथर्ववेदाय स्वाहा ।

अथर्ववेदायेदम् ॥

अथर्वाङ्गिरोभ्यः स्वाहा ।

अथर्वाङ्गिरोभ्य इदम् ॥

इतिहासपुराणेभ्यः स्वाहा ।

इतिहास पुराणेभ्यः इदम् ॥

सर्पदेवजनेभ्यस्स्वाहा ।

सर्प देवजनेभ्य इदम् ॥

सर्वभूतेभ्यः स्वाहा ।

सर्वभूतेभ्य इदम् ॥

अथ पालाशीश्चतस्रः समिधः आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्राः अप्रतिशुष्काग्राः घृतान्वक्ता अभ्याधापयन्वाचयति । याज्ञिकाना वा वृक्षाणामन्यतमस्य ॥

अत्र वा कर्मारंभे वा शिष्यसंकल्पः-होतृव्रत करिष्ये । चरिष्यामीतिवा ॥

अग्नि समन्त तूर्ष्णी परिषिच्य वाचयेत् । अग्नेव्रतपते होतारं व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यता॑ᳪ स्वाहा । अग्नये व्रतपतय इदम् ॥

एव वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते

तूर्ष्णीं परिषिच्य प्राजापत्य काण्डस्याद्यमनुवाकम धीयीत ॥ इषेत्वेत्यनुवाकमधीयीत । [169 पृष्ठे] *

* एकमप्यक्षरं यत्तु गुरुः शिष्ये निवेदयेत् । पृथिव्या नास्ति तद्द्रव्यं यद् दत्वा त्वनृणी भवेत् ॥

स्विष्टकृदादि संस्रावान्तं कृत्वा । आहुतानुकृतिधर्माणि व्रतानि'।

अग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति। नमो अस्तुनीलग्रीवाय+अकर नमः इति

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वा-

नोऽहं तेभ्योऽकरन्नमः ॥

नीलग्रीवदेवतायै बलिमुपहरामि ॥ अथ पक्वादुपादाय प्राश्नाति शरीरं मे विचर्षणमिति—

शरीर मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्या भूरि

विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुत मे गोपाय ॥

प्राश्य अप आचम्य आदित्यमुपतिष्ठते उद्वयमिति [14पृष्ठे] परिषेचनादि समानम् ॥

संवत्सरमेतद्व्रत चरेत्। अनधीतपक्षे यावदध्ययनमेतद्व्रतं चरेत् । यद्वा अध्यापयते । अशक्तश्चेच्छ्रावयेद्वा ॥

## ॥ होतृव्रतोत्सर्जनम् ॥

होतृव्रतोत्सर्जनाङ्ग नान्दीमुखं कृत्वा, सविता प्रीयतामिति पुण्याहम् ॥ अग्निमुखान्ते अव्रत्य प्रायश्चित्तं मिन्दाहुती हुत्वा सावित्र्या पक्वंहुत्वा उपहोमाः याज्ञिकीभ्य इत्यादि पूर्ववत् कृत्वा पालाशी श्चतस्रः समिधः—

अग्नेव्रतपते होतारं व्रतमचारिष तदशकं तन्मे राधि स्वाहा ॥

एवं वायो व्रतपते, आदित्य व्रतपते, व्रताना व्रतपत-इत्यादि स्विष्टकृदादि सप्तव्रान्तं कृत्वा, हुतशेष प्रदानं प्राशन मादित्योपस्थानं परिषेचनादि च पूर्ववत् ॥

॥ अथ शुक्रिय व्रतम् ॥

व्रतान्येतानि चत्वारि कर्तव्यान्युत्तरायणे । इति ज्योतिश्शास्त्रकाराः । सूत्रकारस्तु —शुक्रियव्रतमुत्तरायणे कर्तव्यं इत्याह ॥

अत्र पूर्वपक्षे पुण्ये नक्षत्रे केशश्मश्रूणि वापयित्वा पूर्वेद्युः नान्दीमुखं कृत्वा सविता प्रीयतामिति पुण्याहं । अग्निमुखान्ते अव्रत्य प्रायश्चित्तं सावित्र्या पक्वहोमः स्विष्टकृदवदानम् ॥

अथ उपहोमाः-याज्ञिकीभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहा इति चतस्रः,

याज्ञिकीभ्यो देवताभ्यश्शुक्रियेभ्य इदमित्यादि

अथ काण्डऋषिं जुहोति । सोमाय काण्डऋषये स्वाहा । सोमाय काण्डऋषय इदम् ॥

सदसस्पति मित्यादि दश । नात्र समिदाहुतिः (धानम)

अथ सौम्यकाण्डाद्यमनुवाकम धीयीत । आप उन्दन्तु जीवस इति

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस ओषधे त्रायस्वैन२ स्वधिते मैन२ हि२सी र्देवश्रूरेतानि प्र वपे स्वस्त्युत्तराण्यशीयाऽऽपो अस्मान् मातरश्शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत् प्र वहन्तु रिप्रमुदाभ्यः शुचिरा पूत एमि सोमस्य तनूरसि तनुवं मे

पाहि महीना पयोऽसि वर्चोधा असि वर्चः [१] मयि धेहि वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभि स्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमा वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इन्द्राग्नी द्यावापृथिवी आप ओषधी स्त्वं दीक्षाणमधिपतिरसीह मा सन्त पाहि ॥ २ ॥

स्विष्टकृदादि, हुतशेष प्रदानं प्राशनं परिषेचनादि समानम् ॥

## ॥ अथ अवान्तर दीक्षा ॥

ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य, यत्र गृहा न दृश्यन्ते तत्र गत्वा शुचौ देशे—

एनमवान्तरदीक्षया संस्करिष्यामि-अग्निमुपसमाधाय सपरिस्तीर्य आज्यं संकृत्य मदन्तीरधिश्रित्य नमोवाच् इति प्रथमानुवाकं जपित्वा

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादा वैश्वदेवीं वाचमुद्यासᳪ शिवामदस्ता जुष्टां देवेभ्यः शर्म मे द्यौश्शर्म पृथिवी शर्म

विश्वमिद जगत । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूत वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरण मे प्रजायै पशूना भूयादुपस्तरणमहं प्रजायै पशूना भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमती देवेभ्यो वाचमुद्यास२ँ शुश्रूषेण्या मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

॥ ओ शान्तिः शान्तिः शान्तिः ॥

दर्भैरासनानि प्रवर्ग्य देवताभ्यः कल्पयति ॥ अग्रेणाग्निम्—प्रवर्ग्याय कल्पयामि । घर्माय कल्पयामि । महावीराय कल्पयामि । सम्राजे कल्पयामि ॥

दक्षिणेनाग्निम्—ब्रह्मणे कल्पयामि । प्रजापतये कल्पयामि ॥

उत्तरेणाग्निम्—ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्य. कल्पयामि । देवेभ्यो घर्मपेभ्यः कल्पयामि ।

दक्षिणतः प्राचीनावीती, पितृभ्यो घर्मपेभ्यः कल्पयामि । यमायाऽङ्गिरस्वते पितृमते कल्पयामि । अथाप उपस्पृश्य

उत्तरतो यज्ञोपवीती, रुद्राय रुद्रहोत्रे कल्पयामि-अप उपस्पृश्य-सर्वाभ्यः प्रवर्ग्य देवताभ्यः कल्पयामि ॥

अथ प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिः वैकङ्कतीश्चतस्रः समिधोऽभ्याधाय, मदन्तीभिः प्रवर्ग्यदेवताः तर्पयति । अग्रेणाग्नि-प्रवर्ग्यं तर्पयामि । घर्मं तर्पयामि । महावीरं तर्पयामि । सम्राजं तर्पयामि ॥ दक्षिणेनाग्निं ब्रह्माणं तर्पयामि । प्रजापतिं तर्पयामि ॥ उत्तरेणाग्निं ऋषीन् मन्त्रकृतो मन्त्रपती᳚स्तर्पयामि । देवान् घर्मपा᳚स्तर्पयामि ॥ दक्षिणतः—प्राचीनावीती-पितॄन् घर्मपा᳚स्तर्पयामि । यममङ्गिरस्वन्तं पितृमन्तं तर्पयामि ॥ अप उपस्पृश्य, उत्तरतो यज्ञोपवीती-रुद्रं रुद्रहोतारं तर्पयामि ॥ अप उपस्पृश्य । सर्वाः प्रवर्ग्य देवता स्ततर्पयामि ॥

चतस्रः औदुबंरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति । पृथिवी समित् + समिन्तां स्वाहा ।

पृथिवी समित् । तामग्निः समिन्धे । साग्नि᳚ समिन्धे । तामह᳚ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ता᳚ स्वाहा ॥ अग्नय इदम ॥

अन्तरिक्षं समित् + स्वाहा ।

अन्तरिक्ष᳚ समित् । ता वायुः समिन्धे । सा वायु᳚ + समिन्ता᳚ स्वाहा ॥ वायव इदम्॥

द्यौस्समित + स्वाहा ।

द्यौः समित् । तामादित्यः समिन्धे । साऽऽदित्य᳚ समिन्धे । तामह᳚ + समिन्ता᳚ स्वाहा ॥ आदित्यायेदम् ॥

प्राजापत्यामे + मेऽसि स्वाहा ॥

प्राजापत्या मे समिदसि सपत्न क्षयणी । भ्रातृव्यहा मेऽसि स्वाहा ॥ प्राजापतय इदम् ॥

अथ देवता उपतिष्ठते । अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । एवं-वायो व्रतपते, आदित्य व्रतपते, व्रताना व्रतपते शुक्रियं व्रतं + राध्यताम् ॥ इति ॥

मन्त्रब्राह्मणानुवाकानामादिपदानि वाचयति । प्रथमोत्तमयोर्वा, युञ्जते सविता ॥

अथ सप्रैषमेनं संशास्ति । "संमील्य वाचं यच्छ" इति ॥ *

अथ अहतेन वाससा शिष्यस्य समुखं त्रिः प्रदक्षिण शिरो वेष्टयति । चितस्स्थ परिचित. । स्वाहा मरुद्भिः परि श्रयस्व । इति ॥

प्रदक्षिण मग्निं परिषिच्य व्याहृतीभिः वैंकंकतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा

शन्नोवात इत्युत्तमेनानुवाकेन शान्ति कृत्वा—

शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः । अहानि शम्भवन्तु नः शऽ रात्रिः प्रतिधीयता । शमुषा नो व्युच्छतु शमादित्य उदेतु

* अलोक्यालोकनेनासीदभाष्याणा च भाषणात् । तद्दोषस्याऽपनुत्यर्थं मौनं सम्मीलनं भवेत् ॥

नः । शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि । इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्म ह्यवास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे । द्वाविमौ वातौ वात आसिन्धोरा परावतः ॥

दक्षं मे अन्य आ वातु पराऽन्यो वातु यद्रपः । यददो वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह वात आ वातु भेषजम् । शंभूर्मयोभूर्नो हृदे प्र ण आयूꣳषि तारिषत् । इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन । भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये

प्रजापतेर्ब्रह्मकोश ब्रह्म प्रपद्य ओ प्रपद्ये । अन्तरिक्ष म उर्वन्तर बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्ति मां तया स्वस्त्या स्वस्ति मानसानि । प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधा मयि प्रजा मय्यग्निस्तेजो दधातु मयि मेधा मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधा मयि प्रजा मयि सूर्यो भ्राजो दधातु ॥

द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः । कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु । अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः । वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य-स्मान्निधयेव बद्धान् ॥

शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभि स्रवन्तु नः । ईशाना

नार्याणा क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् । सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ पृथिवी शान्ता साऽग्निना शान्ता सा मे शान्ता शुच५ शमयतु । अन्तरिक्ष९ शान्तं तद्वायुना शान्तं तन्मे शान्त९ शुच९ शमयतु । द्यौः शान्ता साऽऽदित्येन शान्ता सा मे शान्ता शुच५ शमयतु । पृथिवी शान्तिरन्तरिक्ष९ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः । तयाऽह५ शान्त्या

सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिङ्करोमि शान्तिर्मे अस्तु शान्तिः। एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माᳫ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्य धर्मश्चैतानि मा मा हासिषुः। उदायुषा स्वायुषोदोषधीनाᳫ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताᳫ अनु। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शत जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतᳫ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे॥

य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु। ब्रह्मणश्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारित-मेनेन महदन्तरिक्षं दिवं दाधार पृथिवीᳫ सदेवा यदहं वेद तदहं

धारयाणि मा मद्बेदोऽधि विस्रसत् । मेधामनीषे माऽऽविशताꣳ समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि ॥ आभिर्गीर्भिर्यदतो न ऊनमा प्यायय हरिवो वर्द्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ॥ ब्रह्म प्रावादिष्म तन्नो मा हासीत् । ओ शान्तिः शान्तिः शान्तिः ॥

अथाऽस्तमित आदित्ये ग्राममायान्ति ॥ न यानमारोहेदिति न्यायेन पद्भ्यामेव ग्रामं प्रविशेत् ॥ एता रात्रिं वाग्यत उपविशेत् । संविशेद्वा ॥

अथ प्रातरुदित आदित्ये पूर्ववत् वनं गत्वा अग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य नमोवाच इत्यनुवाकं जपित्वा दर्भैः प्रवर्ग्यदेवताभ्यः आसनानि कल्पयित्वा वयस्सुपर्णा इति शिरोवेष्टितं वासो विमोचयति ॥

वयः सुपर्णा उपसेदु रिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्त मूर्णुहि पूर्धि चक्षु र्मुमुग्ध्यस्मा न्निधयेव बद्धान् ॥

अथास्य षड्भिर्दर्शयति । अग्निमप आदित्यं गा ब्राह्मणं हिरण्यमिति । आदौ त्रीन् वा दर्शयेत ॥ यथोपपातमितराणि दर्शयेत ॥ प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिः वैकंकतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यं देवतास्तर्पयित्वा शन्नोवात इत्यनुवाकं जपित्वा,

अथाऽस्य व्रत चर्या मुपदिशेत् ॥ न यानं वृक्षं चाऽऽरोहेत । न छत्रोपानहौ धारयेत् । न कूपमवरोहेत् । न कटे शयीत । न स्त्रीशूद्रैः संभाषेत । यदि संभाषेत ब्राह्मणेन सह संभाषेत ।

शव चण्डाल पतितामेध्य दर्शने ज्योतिषा दर्शनम् ॥ अमेध्यं दृष्ट्वा जपति अबद्धं मनो + हासी, रिति ॥

अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषा श्रेष्ठो दीक्षे मा मा हासीः ॥

अभिवृष्टो जपति-उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षा मा तपो निर्वधिष्ट इति ॥

## ॥ अथ शुक्रिय व्रतोत्सर्जनम् ॥

संवत्सरमेतद्व्रतं चरेत् । इत्यादि व्रतान्ते नान्दीमुखं पुण्याहं च कृत्वा अग्निमुखांते अव्रत्य प्रायश्चित्तं मिन्दाहुती हुत्वा सावित्र्या पक्वं हुत्वा, स्विष्ट-कृत मवदाय निधाय ॥ याज्ञिकीभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहेति चतुष्टयम् ॥

सोमाय काण्डऋषये स्वाहा ॥ सदसस्पतिमित्यादि दशाहुतीः, न समिधः नानुवाकः, स्विष्टकृदादि संस्रावान्तं कृत्वा, हुत शेष प्रदानं प्राशनमादित्योप स्थानं परिषेचनादि समानम् ॥

## ॥ अवान्तर दीक्षा व्रतोत्सर्जनम् ॥

व्रतान्ते एनं माणवकं अवान्तर दीक्षाव्रतोत्सर्जन कर्मणा संस्करिष्ये । इति संकल्प्याचार्यः, पूर्ववद्वनं गत्वा अग्निमुपसमाधाय संपरिस्तीर्य आज्यं संस्कृत्य स्रुक् स्रुवं निष्टप्य संमृज्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्य देवताभ्यः आसनानि कल्पयित्वा अव्रत्य प्रायश्चित्तं मिन्दाहुता हुत्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिः वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयित्वा चतस्र औदुम्बरीः + पयन्वाचयति ॥ शुक्रिय व्रतोत्स-र्जन करिष्ये, परिषिच्य द्यौस्समित् + समिन्ता स्वाहा । अन्तरिक्ष समित्

+समिन्ता॰ स्वाहा । पृथिवी समित् । + समिन्ता॰ स्वाहा । प्राजापत्या इति चतस्रः ॥ अथ देवता उपतिष्ठते । आदित्य व्रतपते शुक्रिय व्रतमचारिषम् । तदशक तन्मे राधि । एव वायो व्रतपते, अग्ने व्रतपते, व्रताना व्रतपते + तन्मे राधि । प्रदक्षिण मग्नि परिषिच्य व्याहृतीभिः वैकंकतीः समीधोऽभ्याधाय मदन्तीभिः प्रवर्ग्य देवतास्तर्पयित्वा शन्नो वात इत्यनुवाकं जपित्वा समापयेत् ॥

## ॥ गोदान व्रतम् ॥

षोडशे वर्षे गोदानम् ॥ होतारः शुक्रियाण्युपनिषदो गोदानमिति चतुर्थव्रतमित्येकः पक्षः ॥ अन्यस्तु अग्निगोदानो वा भवतीति वचनात् । मन्त्र-पाठवशात्—अग्नये काण्डऋषये विश्वेभ्योदेवेभ्य इति गोदानव्रतमेवाग्निकाण्डम् तस्मात् अत्र सशिखं वपनं कुर्यात् । तदुत्सर्जने शिखावर्जवपनम् । एवं नियमाध्ययने कर्तव्यम् । गुरवे वरं च । तस्य द्वादश संवत्सरानेकादश इत्यादि मासं वा व्रतं चरेत् इति नियमं च ॥ *

एनं कुमार गोदानव्रतकर्मणा संस्करिष्ये । पूर्वेद्युः नान्दीमुखं सविता प्रीयतामिति पुण्याहं । अग्निमुखान्ते अत्रत्य प्रायश्चित्तं सावित्र्या पक्वहोमः । याज्ञिकीभ्यो देवताभ्यो गोदानेभ्यः स्वाहा । याज्ञिकीभ्यो देवताभ्यो गोदानेभ्य इदम् ॥ इत्यादि चतस्रः ॥

अग्नये काण्डऋषये स्वाहा ॥ सदसस्पतिमित्यादि दश ॥

* अग्निकार्यात्परिभ्रष्टा सन्ध्यो पासनवर्जिता । वेदांश्चैवाऽनधीयानाः सर्वे ते वृषलाः स्मृताः ॥ तस्माद्वृषळभीतेन ब्राह्मणेन विशेषतः । अध्येतव्यो-ऽप्येकदेशो यदि सर्वो न शक्यते ॥

अत्र संमितव्रतवत् चतस्र औदुंबरीः समिधो + न्वाचयति—अग्ने व्रतपते गोदानं व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यता स्वाहा । एवं वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते ॥

आग्नेय काण्डस्याऽऽद्यमनुवाकमधीयीत—उद्धन्यमानमस्या अमेध्यम् इत्यनुवाकम् ॥

उद्धन्यमान मस्या अमेध्यम् । अप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिश श्चतस्रः । शन्नो माता पृथिवी तोकसाता ॥ शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ वैश्वानरस्य रूपम् । पृथिव्यां परिस्रसा । स्योनमा विशन्तु नः ॥ यदिदं दिवो यददः पृथिव्याः । सं जज्ञाने रोदसी सं बभूवतुः । ऊषान् कृष्णमवतु कृष्ण मूषाः । इहोभयोर्यज्ञिय मागमिष्ठाः ॥ ऊतीः कुर्वाणो यत्पृथिवीमचरः । गुहाकार माखुरूपं प्रतीत्य । तत्ते न्यक्त मिह सं भरन्तः । शतं जीवेम शरदस्सवीराः । ऊर्जं पृथिव्या रसमाभरन्तः । शतं जीवेम शरदः पुरूचीः । वम्रीभिरनुवित्तं गुहासु । श्रोत्र न उर्व्यबधिरा भवामः । प्रजापतिसृष्टाना प्रजानाम् । क्षुधोऽपहत्यै

सुवितन्नो अस्तु । उप प्रभिन्नमिष मूर्जं प्रजाभ्यः । सूर्दं गृहेभ्यो रसमा भरामि ॥ यस्य रूपं बिभ्रदिमा मविन्दत् । गुहा प्रविष्टा सरिरस्य मध्ये । तस्येदं विहत माभरन्तः । अच्छंबट्कार मस्यां विधेम ॥ यत्पर्य पश्यत्सरिरस्य मध्ये । उर्वीमपश्य ज्जगतः प्रतिष्ठाम् । तत्पुष्करस्यायतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनं हरामि ॥ यामिरङ्ह ञ्जगतः प्रतिष्ठाम् । उर्वीमिमा विश्वजनस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वा ॥ अग्ने रेतश्चन्द्रं हिरण्यम् । अद्भ्यः संभूत ममृतं प्रजासु । तत्सं भरन्नुत्तरतो निधाय । अति प्रयच्छन्दुरिति तरेयम् ॥ अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः । संवथ्सरं देवेभ्यो निलाय । तत्ते न्यक्तमिह संभरन्तः । शतं जीवेम शरदः सवीराः ॥ ऊर्जः पृथिव्या अध्युत्थितोऽसि । वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं मदन्तः । रायस्पोषेण समिषा मदेम ॥ गायत्रिया ह्रियमाणस्य यत्ते । पर्णमपतत्तृतीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातः । ततो हरामि

सोमपीथस्यावरुद्ध्यै ॥ देवानां ब्रह्मवादं वदता यत् । उपाश्रृणोः सुश्रवा वै श्रुतोऽसि । ततो मामाविशतु ब्रह्मवर्चसम् । तथ्सं भरꣳ स्तदवरुन्धीय साक्षात् ॥ यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय । शमीꣳ शान्त्यै हराम्यहम् ॥ यत्ते सृष्टस्य यतः । विकङ्कतं भा आर्च्छज्जातवेदः । तया भासा सम्मितः । उरुन्नो लोकमनु प्रभाहि ॥ यत्ते तान्तस्य हृदय माच्छिन्द ज्जातवेदः । मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेः संभरामि । सात्मा अग्ने सहृदयो भवेह ॥ चित्रियादश्वत्था त्सम्भृता बृहत्यः । शरीरमभि सꣳस्कृतास्थ । प्रजापतिना यज्ञमुखेन सम्मिताः । तिस्र स्त्रिवृद्भिर्मिथुनाः प्रजात्यै ॥ अश्वत्था द्धव्यवाहाद्धि जाताम् । अग्नेस्तनूं यज्ञियाꣳ सं भरामि । शान्तयोनिꣳ शमीगर्भम् । अग्नये प्रजनयितवे ॥ यो अश्वत्थः शमीगर्भः । आरुरोह त्वे सचा । तन्ते हरामि ब्रह्मणा । यज्ञियैः केतुभिः सह ॥ यन्त्वा समभरञ्जातवेदः । यथा शरीरं भूतेषु न्यक्तम् । स

सम्भृत स्सीद शिवः प्रजाभ्यः । उरुन्नो लोक मनुनेषि विद्वान् ॥
प्रवेधसे कवये मेध्याय । वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं
तन्नो अस्तु । अव देवान् यजेहेडयान् ॥ समिधाग्निं दुवस्यत । घृतैर्बोध-
यतातिथिम् । आऽस्मिन् हव्या जुहोतन ॥ उप त्वाऽग्ने हविष्मतीः ।
घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ तन्त्वा समिद्भि रङ्गिरः ।
घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ समिध्यमानः प्रथमो नु
धर्मः । समक्तुभि रज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक्
पावकः । सुयज्ञो अग्नि र्यजथाय देवान् ॥ घृतप्रतीको घृतयोनि
रग्निः । घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति ।
घृतं पिबन् थ्सुयजा यक्षि देवान् ॥ आयुर्दा अग्ने हविषो जुषाणः ।
घृतप्रतीको घृतयोनि रेधि । घृतं पीत्वा मधु चारु गव्यम् । पितेव
पुत्रमभि रक्षतादिमम् ॥ त्वामग्ने समिधानं यविष्ठ । देवा दूतं चक्रिरे
हव्यवाहम् । उरुज्रयसं घृतयोनि माहुतम् । त्वेषं चक्षुर्दधिरे चोदयन्वति ॥

त्वामग्ने प्रदिव आहुतं घृतेन । सुम्नायवः सुषमिधा समीधिरे। स वा वृधान ओषधीभिरुक्षितः । उरु ज्रयाꣳसि पार्थिवा वितिष्ठसे ॥ घृतप्रतीक व ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जते । इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णा मुदुनो यꣳ सते धियम् ॥ प्रजा अग्ने सं वासय । अशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि । यान्यासन् थ्सवितुः सवे ॥ मही विश्पत्नी सदने ऋतस्य । अर्वाची एत धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसम् । अध्वराणा जनयथः पुरोगाम ॥ आरोहतं दशतꣳ शक्करीर्मम । ऋतेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरा मुत्तराꣳ समाम् । दर्शमहं पूर्णमासं यज्ञं यथा यजै॥ ऋत्वियवती स्थो अग्निरेतसौ। गर्भं दधाथा ते वामहं ददे । तथ्सत्यं यद्वीरं बिभृथः । वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे । ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके ॥ अनृतात्सत्य-

मुपैमि। मानुषाद्दैव्यमुपैमि। दैवीं वाचं यच्छामि॥ शल्कै रग्निमिन्धानः।
उभौ लोकौसनेमहम्। उभयो र्लोकयोर् ऋध्वा। अति मृत्युं तराम्यहम्॥
जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो यज्जनिष्यते। अग्निमश्वत्थादधि
हव्यवाहम्। शमीगर्भाज्जनयन् यो मयोभूः॥ अयं ते योनिर् ऋत्वियः।
यतो जातो अरोचथाः। तञ्जानन्नग्न आरोह। अथा नो वर्धया रयिम्॥
अपेत वीत वि च सर्पतातः। येऽत्र स्थ पुराणा ये च नूतनाः।
अदादिदं यमोऽवसानं पृथिव्याः। अक्रन्निमं पितरो लोकमस्मै॥
अग्ने भस्मास्यग्नेः पुरीषमसि॥ संज्ञानमसि कामधरणम्। मयि ते
कामधरणं भूयात्॥ सं वः सृजामि हृदयानि। स꣡ꣳ सृष्टं मनो
अस्तु वः। स꣡ꣳ सृष्टः प्राणो अस्तु वः॥ सं या वः प्रियास्तनुवः।
सं प्रिया हृदयानि वः। आत्मा वो अस्तु सं प्रियः। सं प्रियास्तनुवो
मम॥ कल्पेतां द्यावापृथिवी। कल्पन्तामाप ओषधीः। कल्पन्ता
मग्नयः पृथक्। मम ज्यैष्ठ्याय सव्रताः॥ येऽग्नयः समनसः। अन्तरा

द्यावापृथिवी । वासन्तिकावृतू अभिकल्पमानाः । इन्द्रमिव देवा अभिसं विशन्तु ॥ दिवस्त्वा वीर्येण । पृथिव्यै महिम्ना । अन्तरिक्षस्य पोषेण । सर्वपशु मादधे ॥ अजीजनन्नमृतं मर्त्यासः । अस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः । पुमाꣳसं जातमभि सꣳ रभन्ताम् ॥ प्रजापते स्त्वा प्राणेनाऽभिप्राणिमि । पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय । शतꣳ शरद्भ्य आयुषे वर्चसे । जीवा त्वै पुण्याय ॥ अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः ॥ प्राणे त्वाऽमृत आ दधामि । अन्नाद मन्नाद्याय । गोप्तारं गुप्त्यै ॥ सुगार्हपत्यो विदहन्नरातीः । उषसः श्रेयसीः श्रेयसीर्दधत् । अग्ने सपत्नाꣳ अप बाधमानः । रायस्पोष मिषमूर्ज मस्मासु धेहि ॥ इमा उमामुप तिष्ठन्तु रायः । आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी । मध्ये वसोर्दीदिहि जातवेदः ॥ ओजसे बलाय

त्वोद्यच्छे । वृषणे शुष्मायाऽऽयुषे वर्चसे । सपत्नतूरसि वृत्रतूः ॥ यस्ते देवेषु महिमा सुवर्गः । यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे । तया नो अग्ने जुषमाण एहि ॥ दिवः पृथिव्याः पर्यन्तरिक्षात् । वातात्पशुभ्यो अध्योषधीभ्यः । यत्र यत्र जातवेदः संबभूथ । ततो नो अग्ने जुषमाण एहि ॥ प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाहि । ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ अन्वग्निरुषसा मग्रमख्यत् । अन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीन् । अनु द्यावापृथिवी आततान ॥ विक्रमस्व महाꣳ असि । वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि ॥ यदिद दिवो यददः पृथिव्याः । संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः । शंभूः प्रजाभ्यस्तनुवे स्योनः ॥ प्राणन्त्वाऽमृत आदधामि । अन्नादमन्नाद्याय । गोप्तार गुप्त्यै ॥ यत्ते शुक्र शुक्रं वर्चः

शुक्रा तनूः। शुक्रं ज्योतिरजस्रम्। तेन मे दीदिहि तेन त्वाऽऽदधे। अग्निनाऽग्ने ब्रह्मणा ॥ आनशे व्यानशे सर्वमायुर्व्यानशे। नर्य प्रजां मे गोपाय। अमृतत्वाय जीवसे। जाता जनिष्यमाणाश्च। अमृते सत्ये प्रतिष्ठिताम् ॥ अथर्व पितुं मे गोपाय। रसमन्नमिहाऽऽयुषे। अदब्धायोऽशीततनो। अविषन्नः पितुं कृणु ॥ शꣳस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहान्ये। ये चैकशफा आशुगाः ॥ सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपासताम् ॥ अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूꣳषि। सा हि श्री रमृता सताम् ॥ चतुः शिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यजमानाय कामान् ॥ इहैव सन्तत्र सतो वो अग्नयः। प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्तमायुर्मा प्र हासीत्। ज्योतिषा वो

वैश्वानरेणोपतिष्ठे ॥ पञ्चधाऽग्नीन्व्यक्रामत् । विराट् सृष्टा प्रजापतेः ।

ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः ॥

स्विष्टकृदादि संस्रावान्तं हुतशेष प्रदानं प्राशनमादित्योपस्थानं परिषेचनादि समानम् ॥

अत्र नियमाध्ययने तु गोदानव्रते कृते संवत्सरं केशधारणं कर्तव्यं इति स्मृतिः ॥

## ॥ गोदान व्रतोत्सर्जनम् ॥

गोदानव्रतोत्सर्जने नान्दीमुखं पुण्याहम् । अग्निमुखान्ते अव्रत्यप्रायश्चित्त सावित्र्या पक्वहोमः । गोदानव्रतवदुपहोमाः पञ्चदश ॥ चतस्र औदुम्बरीस्समिधः । अग्ने व्रतपते गोदानं व्रतमचारिषम् । तदशक तन्मे राधि स्वाहा । एवं वायो व्रतपते, आदित्य व्रतपते, व्रताना व्रतपते । स्विष्टकृदादि हुतशेषप्रदानं प्राशनमादित्योपस्थान परिषेचनादि समानम् ॥

## ॥ उपनिषद्व्रतम् ॥

नान्दीमुखं पुण्याह अग्निमुखान्ते अव्रत्य प्रायश्चित्तं सावित्र्या पक्वहोमः ॥

तत उपहोमाः — याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा इत्यादि चतस्रः ॥ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ॥ सदसस्पति मित्यादि दश ॥

अथ पालाशीश्चतस्रः समिधो + पयन्वाचयति । अग्ने व्रतपते उपनिषदं व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यता स्वाहा ॥ एवं

वायो व्रतपत इत्यादि ॥ अथ वैश्वदेव काण्डस्याद्यमनुवाकमधीयीत । अनुमत्यै पुरोडाश मष्टाकपालं निर्वपति धेनुर्दक्षिणा इत्यनुवाकम् ॥

अनुमत्यै पुरोडाश मष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तन्नैर्ऋत मेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा वीहि स्वाहाऽऽहुतिं जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेमम॑ँहसः स्वाहा नमो य इद चकाराऽऽदित्यं चरुं निर्वपतिवरो दक्षिणाऽऽग्नावैष्णव मेकादशकपालंवामनो वही दक्षिणाग्नी-षोमीय मेकादशकपाल॑ँ हिरण्य दक्षिणैन्द्र मेकादशकपाल मृषभो वही दक्षिणाऽऽग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरु प्रथमजो वत्सो दक्षिणा सौम्य॑ँ श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरु॑ँ सरस्वते चरुं मिथुनौ गावौ दक्षिणा ॥

स्विष्टकृदादि हुतशेष प्रदानं प्राशनमादित्योपस्थानं परिषेचनादि समानम् ॥

## ॥ उपनीषद्व्रतोत्सर्जनम् ॥

सवत्सरमेतद्व्रत चरेदित्यादि व्रतान्ते नान्दीमुखं पुण्याहं अग्निमुखान्ते मिन्दाहुती प्रायश्चित्तम् ॥ सावित्र्या पक्वहोमः । उपनिषद्व्रतवदुपहोमाः ।

पालाशीश्चतस्रः समिधः + यन्वाचयति । अग्ने व्रतपते उपनिषदं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा । एवं वायो व्रतपत इत्यादि ॥

स्विष्टकृदादि हुतशेषप्रदान प्राशनमादित्योपस्थानं परिषेचनादि समानम् ॥

नापक्काः पाकयज्ञाः । सर्वत्र पक्वहोमं कुर्यादिति न्यायेन होम प्रदान प्राशनानि व्याख्यातानि भवन्तीति वचनात् व्रताना चतुर्णा तदुत्सर्जनाना च पक्व होम हुतशेषप्रदान प्राशनमादित्योपस्थानं च आहुतधर्माः उपनयनवत् कर्तव्यम् ॥

पक्वं तु अनाम्नातत्वात् सावित्र्या पक्व कुर्यात् ॥

अष्टाचत्वारिंशद्वर्षे संमितव्रतं कुर्यात् । अत्र स्वायंभुवं काण्डं सह वैं देवानामिति प्रश्नः ॥ तै - आर - द्वितीयप्रश्नः ॥

## ॥ अथ काण्डानुक्रमः ॥

## ॥ अथ प्राजापत्य काण्डः ॥

पौरोडाशिकं याजमान होतारो हौत्रं पितृमेध इति, इषेत्वादि ॥

## ॥ अथ सौम्यकाण्डः ॥

आध्वर्यव ग्रहा दाक्षिणानि समिष्टयजूंष्यवभृथयजूंषि वाजपेयः शुक्रियाणि सवा इति, आप उन्दन्त्वित्यादि ॥

## ॥ अथ आग्नेय काण्डः ॥

अग्न्याधानं अग्निहोत्रं अग्न्युपस्थानं अग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रं वैश्वसृजारुणा इति उद्धन्यमानमित्यादि ॥

## ॥ अथ वैश्वदेव काण्डः ॥

राजसूयः पशुबन्ध इष्टयो नक्षत्रेष्टयो दिवश्येनयोऽपाघाः सात्रायणमुपहोमाः कौकिली सूक्तान्यौपानुवाक्यं याज्याऽश्वमेधः पुरुषमेध·

सौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषद इति, अनुमत्यै पुरोडाश मष्टाकपालं निर्वपति धेनुर्दक्षिणा इत्यादि ॥

काण्डचतुष्टयेऽपि सब्राह्मणानि सानुब्राह्मणानि तत्तन्नामानि ॥

सह वै देवाना मिति प्रश्नः स्वायंभुव काण्डः ॥ *

## ॥ अध्यायोत्सर्गः ॥

श्रावण्या यद्युपाकर्म माध्या मुत्सर्गः। आषाढ्या चेत्तैष्यामुत्सर्गः। प्रोष्ठपद्यां चेन्माघ्यामेवोत्सर्गः ॥ तत्र उपाध्यायः सशिष्यः ग्रामात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्र सुतीर्था आपः शुद्धा भवन्ति। तत्र शनैर्गत्वा संकल्प्य स्नात्वा सुरभिमत्याद्यैरद्भिः मार्जयित्वा अन्तर्जलगतः अघमर्षणेन त्रीन् प्राणायामान् धारयित्वा तत उत्तीर्य वासः पीडयित्वा प्रयतानि वासांसि परिधाय अप आचम्य, अपा समीपे पृथक् पृथक् दक्षिणमध्योतराणि त्रीणि सैकतानि स्थण्डिलानि कृत्वा दर्भा नन्योन्यस्मै प्रदाय दर्भैरासनानि कल्पयति ॥ **

देवाना मध्ये उत्तरत ऋषीणा दक्षिणतः पितॄणाम् ॥

देवमण्डले—प्राचीरुदक्संस्थाष्षट्, उदीचीः प्राक्संस्था अष्ट च रेखा लिखित्वा तत्र पञ्चत्रिंशत्पदानि कल्पयित्वा तद्दक्षिणतोऽगस्त्यायैकं च कल्पनीयम् ॥

ऋषिमण्डले प्राचीः उदक्संस्था अष्टौ उदीचीः प्राक्संस्थाश्चाऽष्टौ लिखित्वा तत्र एकोनपञ्चाशत् पदानि कल्पनीयानि ॥

पितृमण्डले—प्राचीः दक्षिणासंस्था श्चतस्रः दक्षिणाग्राः प्रत्यक्संस्था अष्टौ च रेखा लिखित्वा तत्र एकविंशतिपदानि कल्पयित्वा, तद्दक्षिणतः

* काण्डव्रतानां तदुत्सर्जनानां च समानतन्त्रेण प्रयोगोऽपि दृश्यते ॥

** देवानामृषीणा च प्रत्येकं द्वाभ्यां पितॄणां प्रत्येकं त्रिभिश्च दर्भैः आसनानि ॥

प्राचीर्दक्षिणासस्थाश्चतस्रः दक्षिणाग्राः प्रत्यक्सस्र. पञ्च च रेखा लिखित्वा द्वादश च कल्पनीयानि ॥

| | | | | | |
|---|---|---|---|---|---|
| 35 | 28 | 21 | 14 | 7 | |
| 34 | 27 | 20 | 13 | 6 | |
| 33 | 26 | 19 | 12 | 5 | |
| 32 | 25 | 18 | 11 | 4 | 36 |
| 31 | 24 | 17 | 10 | 3 | |
| 30 | 23 | 16 | 9 | 2 | |
| 29 | 22 | 15 | 8 | 1 | |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 49 | 42 | 35 | 28 | 21 | 14 | 7 | 1 | 2 | 3 | | | |
| 48 | 41 | 34 | 27 | 20 | 13 | 6 | 4 | 5 | 6 | 22 | 23 | 24 |
| 47 | 40 | 33 | 26 | 19 | 12 | 5 | 7 | 8 | 9 | 25 | 26 | 27 |
| 46 | 39 | 32 | 25 | 18 | 11 | 4 | 10 | 11 | 12 | 28 | 29 | 30 |
| 45 | 38 | 31 | 24 | 17 | 10 | 3 | 13 | 14 | 15 | 31 | 32 | 33 |
| 44 | 37 | 30 | 23 | 16 | 9 | 2 | 16 | 17 | 18 | | | |
| 43 | 36 | 29 | 22 | 15 | 8 | 1 | 19 | 20 | 21 | | | |

सर्वेषु चतुर्थ्यन्तेषु कल्पयामीत्यनुषङ्गः कार्यः ॥

मध्ये स्थण्डिले-ब्रह्मणे कल्पयामि, प्रजापतये कल्पयामि बृहस्पतये अग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्यः ऋतुभ्यः संवथ्सराय इन्द्रायराज्ञे यमायराज्ञे वरुणायराज्ञे सोमायराज्ञे वैश्रवणायराज्ञे वसुभ्यः रुद्रेभ्यः आदित्येभ्यः विश्वेभ्योदेवेभ्यः साध्येभ्यः देवेभ्यः मरुद्भ्य; ऋभुभ्यः भृगुभ्यः अथर्वेभ्यः अङ्गिरोभ्यः विश्वमित्राय जमदग्नये जामदग्न्याय भरद्वाजाय गौतमाय आत्रेयाय वसिष्ठाय कश्यपाय अरुन्धत्यै कल्पयामि । अथ दक्षिणतः - अगस्त्याय कल्पयामि ॥

उत्तरतो निवीतिनः——

कृष्णद्वैपायनाय जातुकर्ण्याय तरुक्षाय तृणबिन्दवे सोमशुष्मिणे सोम शुष्मायणाय वाजिनेवाजश्रवसे बृहदुक्थाय वर्मिणे वज्रिणे रूथाय सनत्कुमाराय

वामदेवाय वाजिरत्नाय वार्राजताय हर्यश्वाय उदमेघाय ऋणंजयाय तृणजयाय कृतञ्जयाय धनञ्जयाय सत्यंजयाय बभ्रवे त्र्यरुणाय त्रिवर्षाय त्रिधातवे अश्वज्ञाय पराशराय मृत्यवे कर्त्रे विकर्त्रे सुकर्त्रे त्वष्ट्रे धात्रे विधात्रे सुश्रवसे सुतश्रवसे सत्यश्रवसे सवित्रे सावित्र्यै छदोभ्यः ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय अथर्वाङ्गिरोभ्यः इतिहास पुराणेभ्य. सर्पदेव जनेभ्यः सर्वभूतेभ्यः कल्पयामि ॥

दक्षिणतः प्राचीनावीतिनः——वैशंपायनाय फलिङ्गवे तित्तिरये उखाय उख्याय आत्रेयायपदकाराय कौण्डिन्यायवृत्तिकाराय काण्वायबोधायनाय प्रवचनकाराय आपस्तम्बायसूत्रकाराय सत्याषाढाय हिरण्यकेशाय वाजसनेयाय याज्ञवल्क्याय भरद्वाजाय आग्निवेश्याय आचार्येभ्यः ऊर्ध्वरेतोभ्यःवानप्रस्थेभ्यः वंशस्थेभ्यः एकपत्नीभ्यः कल्पयामि इति ॥

अथ यथास्वपितृभ्यः कल्पयन्ति——

पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यः मातामहेभ्यः मातुः पितामहेभ्यः मातुः प्रपितामहेभ्यः मातामहीभ्यः मातुः पितामहीभ्यः मातुः प्रपितामहीभ्यः ॥

अथ ब्रह्मणे नम इत्यादि मन्त्रैः पृथक् पृथक् पाद्यमर्घ्यमाचमनीयं च दत्वा सुरभिमत्याद्यैः मार्जनम् । ब्रह्मणे नम इत्यादिभिः गन्धपुष्पधूपदीपादीन् दत्वा देवऋषि पितृतर्पणानि क्रमेण कृत्वा अन्नेन पृथक् पृथक् बलीन् हरेत् ब्रह्मणे नम इत्यादि मन्त्रैः ॥ अथ फलमिश्रोदकेन ब्रह्माण तर्पयामि इत्याद्यैः पृथक् पृथक् तर्पयित्वा त्रीननुवाकान् अधीयीरन् ॥ काण्डादीन् वा सर्वान् ॥ काण्डात्काण्डात्प्ररोहन्तीति द्वाभ्या उदक समीपे दूर्वाङ्कुराणि न्नापयन्ते ॥

काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥

अथ माणवकाः परस्परं हस्तैः हस्तान् गृहीत्वा अमुष्मै नमोऽमुष्मै नम इति नामग्राहं उदक मूर्मिमंत कुर्यात् । स्नात्वा तत्र जलमुद्दिश्य यथाबलं धावन् गृहान् गत्वा अपूपैर्धानाभिरोदनेनेति यथालिङ्गं ब्राह्मणास्तर्पयति ॥

पुण्याहं वाचयेत् । छन्दास्योषधयः आचार्यः प्रीयन्तामिति ॥

उपाकर्मोत्सर्जनमकृतं चेत् उपाकर्मारंभात् पूर्वं प्रायश्चित्तं कृत्वा आरभणीयम् ॥ यद्वा उपाकर्मणि पक्वहोमात् पूर्वं प्रायश्चित्तं कार्यम् ॥ उपाकर्मोत्सर्जन प्रायश्चित्तं करिष्ये ॥ पाहिनो अग्न इति पञ्च ॥

आपस्तंबः—आदौ कामो कार्षीन्मन्युरकार्षीन्नम इत्यष्टोत्तरशतकृत्वो जपेदिति प्रायश्चित्तमाह ॥ पश्चादुपाकर्मारंभः ॥

## ॥ समावर्तनम् ॥

वेदमधीत्यस्नास्यन्निति वेदं वेदौ वेदान् वा अधीत्य अन्ते स्नास्यन् वेदस्नातकः ॥ यस्तु वेदमनधीत्य विवाहार्थं स्नास्यन् स व्रत स्नातकः ॥ यस्तु वेदमधीत्य विवाहार्थं स्नास्यन् स वेदव्रतस्नातकः ॥ एवं त्रयः स्नातकाः भवन्ति वेदस्नातकः व्रतस्नातकः वेदव्रतस्नातक इति ॥

आपूर्यमाणपक्षे रोहिणी पुष्योत्तरफल्गुनी हस्त चित्रा विशाखा नक्षत्राणामेकस्मिन् दिने कुर्यात् ॥ इतः पूर्वमाचार्यकृत्यम् ॥ समावर्तनं तु शिष्यकृत्यम् ॥

नान्दीमुखं उदकशान्ति प्रतिसरबन्धमङ्कुरार्पणं च आचार्यमुखेन कारयित्वा, अथ संभारानुपकल्पयते-एरका चोपबर्हणं च नापितं च क्षुरं च एकविंशति इध्मदारूणि एरकोपरि समास्तीर्णं वस्त्रं च वृकलकाष्ठं दन्त धावनार्थं उष्णाः शीताश्चापः सर्वसुरभिपिष्टं च सुगन्धादि अंजनं स्रजं च आदर्श चाहतं वासः प्रपानं च वसनान्तरमुत्तरीयं द्वे यज्ञोपवीते बादरमणिं सुवर्णोपधानं सूत्रं च प्रवर्तौ च दण्डं चोपानहौ छत्रमानडुहं चर्म सर्वलोहितं एवं संभारानाहृत्य शिष्यः कुर्यात् ॥

स्नास्यामीति संकल्प्य, श्रीः प्रीयतां इति पुण्याहम् ॥ उल्लेखनादि लौकिकाग्नौ कुर्यात् । पात्र सादनकाले संभारान् सर्वान् सहैव संसाद्याऽऽग्नि-मुखात् कृत्वा आमध्यन्दिनादास्ते ॥

अत्र विशेषः, पुरा आदित्यस्योदयाद् व्रजमभिगच्छेत । यदि न गच्छेत् एनमादित्यः तेजसा तपति । पूर्वार्धमध्ये व्रजस्य कर्म कार्यम् । व्रजद्वारं चर्मणा पिधाय कुर्यात् ॥

अथ मध्याह्ने भिक्षाकाले पलाशीं समिधमाज्येनाक्त्वाऽभ्यादधाति इमं स्तोमं + तव स्वाहेति ॥

इम॒ꣳ स्तोम॒ मर्हते जा॒तवे॑दसे॒ रथ॑मिव॒ सं मर्हे॒मा मनी॒षया॑ ।

भ॒द्रा हि नः॒ प्रम॑तिरस्य स॒ꣳस॒द्यग्ने॒ स॒ख्ये मा रि॑षामा व॒यं तव॑

स्वाहा ॥ अग्नये जातवेदस इदम् ॥

अथ एरकायामुत्तरत उपबर्हणयुक्तायां उदीचीनशिरा निपद्यते त्र्यायुषं जमदग्नेः + अस्तु त्र्यायुषमिति

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषमृषीणां

त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥

क्लिद्यमानमनुमन्त्रयते — शिवा मे भवथ सँस्पर्शाः इति ॥

क्षुरमभिमन्त्रयते -- क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिँसीरिति ॥

• उप्यमानमनुमन्त्रयते—यत् क्षुरेणवर्च्चयसि + प्रमोषीरिति ॥

यत् क्षुरेण वर्चयसि वप्ता वपसि केशश्मश्रु वर्चया मे मुखं मा म आयुः प्रमोषीः ॥

क्षुरकृत्यमाचार्यः कुर्यान्निवीती ॥ पश्चान्नापितेन कारयेत् ॥

श्मश्रूण्येवाग्रे वपते अथोपपक्षौ अथ केशान् यथोपपातमितराण्यंगानि एतन्मानुषवपनम ॥

उपपक्षावग्रेऽवपन्त अथश्मश्रूणि अथकेशानितराण्यङ्गानि इति देववपनम् ॥

केशानग्रेऽवपन्त अथ श्मश्रूणि अथोपपक्षौ इतराण्यंगानि इति आसुर-वपनम् ॥

आचार्यस्तु (अ)न्नियमेन सर्वाङ्गवपनापेक्षया केशश्मश्रू वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत इत्युच्यते । केशश्मश्रुलोमनखवपनेनैव प्रतिपद्यते इति च ॥ अवश्यं देववपनेन मानुष वपनेन वा कर्तव्यम । देववपनेन स्वर्ग

गमिष्यति। मनुष्यवपनेन प्रजया पशुभिरेति। आसुरवपनेन सदापराजितो भवेत्। अथ सर्वाङ्गवपनं कर्तव्यमित्यत आह—

प्रकोष्ठ(?)शिखावर्ज वपनं श्रुतिचोदितम्। आयुः क्षीणं तपो नष्टं अज्ञानाद्यदि वापयेत्॥ एवं वापयित्वा अथैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाह—इमानि हृत्वा दर्भस्तंबे वा उदुंबरमूले वा निधत्तादिति॥ तानि स तत्र निदधाति॥

अपरेणाग्निं प्राङ्मुख उपविश्य मेखला विस्रंसयति इमं वि ष्यामि वरुणस्य पाशमित्यृचा——

इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुशेवः।
धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि॥

ता मेखलां मित्रस्य पुत्राय शिष्याय वा प्रयच्छन्नाह—इमां हृत्वा न्यग्रोधे वा उदुंबरमूले वा निधत्तादिति। तां स तत्र निदधाति—इदमहं देवदत्त शर्मणः अमुकगोत्रस्य शुचा पाप्मानमपगूहाम्युत्तरस्य द्विषद्भ्यः इति॥

अथ वृकलकाष्ठेन दन्तधावनं कुर्यात् अन्नाद्याय व्यपोहध्वं भगाय च इति —

अन्नाद्याय व्यपोहध्वं भगो राजा यमागमत्। स मे मुखं प्रसर्पतु वर्चसे च भगाय च॥

अथ उष्णासु शीता आनयति देवमानुषस्य व्यावृत्यै इति ॥ उभयीरपो ञ्जलिना उपहृत्याभिषिंचति — आपोहिष्ठेतितिसृभिः (7पृष्ठे) हिरण्यवर्णा इति तिसृभिः (8पृष्ठे)

अथ सर्वसुरभिपिष्टं सुगन्धं समुदायुत्य हस्ताभ्यामालोड्य त्रिः प्रसिञ्चति = प्रक्षिपति—नमः शाकजंजभाभ्या नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः इति ।

अथ शिरसि आदावनुलिंपेत् = धारयेत्—अप्सरासुयो + विशत्विह ॥

अप्सरासु यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मामाविशत्विह ॥

अत्र द्वे वाससी द्वे यज्ञोपवीते ॥ अहतं वासः परिधत्ते—रवा मा तनूराविश, शिवो मा तनूराविश । इत्येवमेव सायमुत्तरीयम् ॥ यद्वा अजिनं वासः सूत्रं वा उत्तरीयं इति वचनात् तृतीयमुपवीतं उत्तरीयार्थं धारयेत् । यज्ञोपवीतमिति द्वयं मन्त्रवद्धार्यं तृतीयमुपवीतं भूर्भुवस्सुवः इति धारयेत् ॥

आचम्य सर्वदा नववस्त्रं नवोपवीतं च मन्त्रवद्धारयेत् ॥

अत्रोक्तवत् बादरमणिं सुवर्णोपधानं सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे सूत्रेण पर्यस्याज्याऽऽहुतीर्जुहोति — इयमोषधे + करोतु स्वाहेति ॥

इय मोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चस७ सूर्यवर्चसं ब्रह्मवर्चसिनं माऽन्नादं करोतु स्वाहा ॥ ओषधय इदम् ॥

अथैनमुदपात्रेण परिप्लावयति — विश्वा उत + द्विष इति ॥

विश्वा उत त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषः ॥

बादरमणिमुपवीतवत् बध्नाति – अपाशोऽसीति ॥

अथ सौवर्णे प्रवर्तौ कुण्डले सूत्रे प्रोत्य दर्व्यामाधाय दर्वीदण्डे सूत्रेण पर्यस्याज्याहुती जुहोति आयुष्य वर्चस्यं रयि७ स्वाहा, शुनी मिवाहं हिरण्यस्य, उच्चैर्वाजि, विराजं च, यशो मा कुरु इति पञ्चभिः ॥

आयुष्यं वर्चस्य७ रायस्पोष मौद्भिदयम् । इद७ हिरण्यं वर्चसे जैत्र्याया विशता दिम७ रयि७ स्वाहा ॥ हिरण्यायेदम् ॥

शुनीमिवाह७ हिरण्यस्य पितुरिव नामग्राहम् । तं मा करोतु सोमवर्चस७ सूर्यवर्चसं ब्रह्मवर्चसिन माऽन्नादं करोतु स्वाहा ॥ हिरण्यायेदम् ॥

उच्चैर्वाजि पृतनासाह७ सभासाहं धनञ्जयम् । सर्वाः समृद्धीर् ऋद्धयो हिरण्ये याः समाहिताः स्वाहा ॥ हिरण्यायेदम् ॥

विराजं च स्वराजं चाभिष्टीर्या च नो गृहे। लक्ष्मी राष्ट्रस्य या मुखे तया मा सं सृजामसि स्वाहा ॥ हिरण्यायेदम् ॥

यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु। यशो विश्येषु शूद्रेष्वहमस्मै यशास्तव स्वाहा ॥ हिरण्यायेदम् ॥

कुण्डलावुदपात्रे परिप्लावयति विश्वा उतत्वया वयमित्येतया ॥

तयोरेकमादाय दक्षिणे कर्णे आबध्नाति आबुष्य वर्चस्यमिति पञ्चभिः ॥ एनमावर्तयति — ऋतुभिस्त्वार्तवै + करोमि इति ॥

ऋतुभिस्त्वाऽऽर्तवैः संवत्सरस्य धायसा तैस्त्वा सहानुकरोमि ॥

अथ सव्ये कर्णे अन्यं कुण्डलं एतैर्मन्त्रैः षड्भिश्च आबध्नाति ॥

अथ शिखाया स्रजं प्रतिमुञ्चति—शुभिकेशिर आरोह +भगायचइति ॥

शुभिके शिर आरोह शोभयन्ती मुखं मम। मुखं हि मम शोभय भूयांसञ्च भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै। तां त्वेमा प्रतिमुञ्चामि वर्चसे च भगाय च ॥

अथ त्रैककुदेनाऽञ्जनेनाऽऽङ्क्ते सतूलयाङ्क्ते पञ्चकृत्व आङ्क्ते — यदाञ्जनं + मस्तु ॥

केचिदेवं कुर्वन्ति । आवहन्ती इति पुरोऽनुवाक्यामनूच्य ततो मे श्रियमावहेति याज्यया जुहोतीति ॥ एवं न्यायः सूत्रे नोक्तः । यत्रैकाम्नाता स्यादिति न्यायेन कर्तव्यम् ॥

अथ आज्याहुतीरुपजुहोति । आ माँ यन्तु ब्रह्मचारिणः स्वाहा । इति पञ्चभिः ॥

आ मा यन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिण इदम् ॥ यशो जने ऽसानि स्वाहा ॥ यशस इदम् ॥ श्रेयान् वस्यसोऽसानि स्वाहा ॥ श्रेयस इदम् ॥ तं त्वा भग प्र विशानि स्वाहा ॥ भगायेदम् ॥ स मा भग प्रविश स्वाहा ॥ भगायेदम् ॥

स्विष्टकृदादि संस्रावान्तं कृत्वा । अग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति — तस्मिन् त्सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा ॥

अथ पक्वादुपादाय प्राश्नाति - यथापः प्रवतायन्ति + स्वाहेति ॥

यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मा ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा ॥

प्राश्य अप आचम्य उरः प्रत्यात्मानं प्रत्यभिमृशते ॥

प्रति वेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥

परिषेचनादि समाप्य अत्रैवास्ते आनक्षत्राणामुदयात् ॥ अथोदिते— म्य—पादुके वैणव द ड छत्रमुर्णाषपुस्तकम् ।

गच्छेत् स्नातक आदाय तण्डुलांश्च कमण्डलुम् ॥

गम्यां दिशं उपतिष्ठते - देवीः षड्डुर्वीः + वीरयध्वमिति ॥

देवीः षड्डुर्वी रुरुणः कृणोत विश्वे देवास इह वीरयध्वम् ॥

मा ह्रास्महि प्रजया मा तनूभिः इति नक्षत्राण्युपतिष्ठते ॥

चन्द्रमस मुपतिष्ठते—मा रधाम द्विषते सोम राजन् ॥ इति ॥

## ॥ अथ तूष्णीं समावर्तनम् ॥

पूर्वोक्ते (पूर्वेद्युः) नान्दीमुखादि चतुष्टयं च आचार्यमुखेन कृत्वा नास्यामीति ॥

अग्निमुपसमाधाय संपरिस्तीर्य आज्यं संस्कृत्य पालाशीं समिधं आज्येनाक्त्वाऽभ्यादधाति । इम स्तोममित्यृचा ॥

वपनादि छत्रादानान्तं तूष्णीं कृत्वा ॥

## ॥ अथ शिष्यायाचार्यो मधुपर्कं दद्यात् ॥

अथ रथस्य दक्षिणं चक्रमभिमृशति — रथन्तरमसीति । सव्यं चक्रं बृहदसीति ॥ रथस्य मध्यममभिमृशति वामदेव्यमसीति ॥ रथ प्रवर्तमानमभिमन्त्रयते-अयं वा मश्विना रथो मा दुःखे मा सुखे रिषत् इति ॥ रथाभावे अप उपस्पृश्य भूमिमभिमृशति-इह धृति रिह विधृति रिह रन्ति रिह रमतिरिति ॥*

अप उपस्पृश्य हृदयमभिमृशति — मयीन्द्रियं वीर्यम् । इति ॥

* अथ मन्त्रः श्रौतसूत्रे 17 प्रश्ने 12 अध्याये मधुपर्क प्रकरणे इत्थं दृश्यते इह धृति....रमतिरिह रमताम् ॥ इति

अपो व्रीहिभिः यवैर्वा संमिश्र शिष्याय प्रयच्छति। स प्रतिगृह्णाति आम आगाद्वर्चसा+पशूनामिति।

आ म आगाद्वर्चसा यशसा स॒सृज पयसा तेजसा च। तं मा प्रियं प्रजानां कुर्वधिपति पशूनाम् ॥ इति तदुपस्पृश्य वदेत् ॥

प्राक्सिक्तं तज्जलं पुरस्तात्सिञ्चति ॥

दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदक क्षीरमिश्रं वा मधुपर्क इति निवेदयेत् ॥ तदभिमन्त्रयते - स माऽवतु स माऽवन्तु स मा जुषता इति ॥ हस्ताभ्यां प्रतिगृह्णाति - आम आगाद्वर्चसा+पशूनामिति ॥ अर्ध्यपतितं तृणमङ्गुष्ठेन महानाम्न्याच नैर्ऋत्यांदिशि निरस्यति नेष्ठाविद्धि+द्विष्म इति।

नेष्ठा विद्धि कृन्तामि या ते घोरा तनूः। तया तमाविश योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥

अपः स्पृष्ट्वा सर्वाभिः अङ्गुलीभिः समुदायुत्य प्राश्नाति—इदंतेबलं हरामीति प्रथमं। श्रेष्ठ माऽधिपति कुर्विति द्वितीयं। सोमोऽसि सोमपं मा कुर्विति तृतीयम्। अन्नमस्यन्नं मा कुर्विति चतुर्थम ॥ यमात्मनः श्रेयासमिच्छेत् तस्मै शेषं दद्यात् ॥

गामनुमन्त्रयते — जहि मे पाप्मानमुपवेत्तुः इति ॥ अथगामुत्सृजेत् — गौर्धेनुभव्या + ओं उत्सृजतेति ॥

गौर्धेनुभव्या माता रुद्राणां दुहिता वसूना॒ स्वसाऽऽदित्याना — ममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागा मदितिं वधिष्ट। पिबतूदकं तृणान्यत्तु। ओमुत्सृजत ॥

ओदनमाहृतं प्राश्नाति - ब्रह्मन्त्वाऽश्नामि इति ॥ उदकमिश्रं सक्तुं आहृतमश्नाति — ब्रह्मन्त्वाऽश्नामि इति ॥ *

एव जड बधिर मूकान्धकुब्जादीनाम् ॥

अशक्तस्तूष्णीं समिधमाधाय शेषं तूष्णीमाचरेत् ॥

समावर्तन प्रभृति सायं प्रातः आज्येन व्याहृतिभिरेव होमः । औपासनो दण्डः कमण्डलुरुपानहौ छत्रं द्वे वाससी द्वे यज्ञोपवीते उष्णीषमजिनमन्तर्वास इति नित्यानि ॥

विवाहार्थं स्नातकः तस्मिन् दिवसे पाणिग्रहणं कुर्यात ॥

## ॥ अथ परिवेदनम् ॥

दाराग्निहोत्र संयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ इति ।

परिवित्तिः परिवेत्ता यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृ याजक पञ्चमाः ॥

ज्येष्ठायां सत्यनूढाया येनाग्रं गृह्यतेऽनुजा । ?
सैवाऽग्रेदिधिषूर्ज्ञेया पूर्वजा दिधिषूस्मृता ॥

एकमातृप्रसूतानां भ्रातृणा परिवेदने ।
दोषः स्यात सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

परिवेत्रादि दोषाभावमाह—

उन्मत्तः किल्बिषी ज्येष्ठो जात्यन्धः क्लीब एव वा ।
राजयक्ष्मयोपि स्यात् न दोषः परिवेदने ॥

अत्र जात्यन्ध इति वचनात कालान्तरे संभूतस्यापि न दोषः ।

---

* अत्र मधुपर्क विषयमधिकृत्य यथाकोशं मया ग्रथितम् ॥

धर्मसारेऽपि—

षण्डान्ध पतित स्तब्ध जड गद्गद पङ्गुषु ।
ज्येष्ठेषु सोदरेष्वेव न दोषः परिवेदने ॥

काश्यपः—

उन्मत्तः पतितः कुष्ठी तथा षण्डस्तु सोदरः ।
चक्षुःश्रोत्र विहीनश्च तथाऽपस्मारदूषितः ॥
पाणिपाद विहीनो वा न दोषः परिवेदने ॥

कात्यायनः—

देशान्तरस्थ क्लीबैकपादहस्तांश्च सोदरान् ।
वेश्यादिसक्त पतित शूद्रकल्पादि(ति) रोगिणः ॥
जडमूकान्ध बधिर कुब्जवामन को(खे)टकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपेषु च ॥
धनुर्वृत्ति(धनवृद्धि) प्रसक्तांश्च कामतः पापचारिणः ।
कुहकोन्मत्तघो(चो)राश्च परिवेत्ता न दुष्यति ॥

कोटो भग्नपादः, अथ शातातपः—

क्लीबे देशान्तरस्थे वा पतिते भिक्षुकेऽपिवा ।
योगशास्त्रप्रयुक्ते वा न दोषः परिवेदने ॥

एवमादि वचनैः परिवेत्तुः परिवेदकस्य च दोषाभावः प्रतिपादितः ॥

तथाऽग्रेदिधिषु दिधिष्वोश्च ॥ — अथ धर्मः ॥

परिवित्तः परिवेत्ता या चैनं परिविन्दति ।
सर्वे ते नरकं यान्ति दाता याजकपञ्चमाः ॥

परिवित्तः परिवेत्ता दाता यश्चापि याजकः ।
कृच्छ्रद्वादशरात्रेण त्रिरात्रेण विशुध्यति ॥

एवं कृच्छ्रं कृत्वा प्रायश्चित्तं मिन्दाहुती जुहुयात ॥
तथैवाऽग्रेदिधिषूपतिरपि प्रायश्चित्तं कुर्यात् ॥

परिवित्तः परिवेत्ता तयोः दातारौ याजकश्च इति पञ्च ॥ अग्रेदिधिषूः दिधिषुः द्वयोर्भ्रातरौ द्वयोर्दाता याजकः षट् । एते सर्वेऽपि प्रायश्चित्तयोग्याः ॥ तस्मादेकस्मात् प्रसूतानां स्त्रीपुरुषाणां कर्मणि उक्तप्रकारेण दोषाभावः ॥ पुरुषाणां क्रमेण तत्तत्कर्माणि कार्याणि ॥

सर्वे मासा विवाहस्य शुचितपस्तपस्य वर्ज्यमिति सूत्रकारः ॥

कुंभ कन्या धनुः कर्किराशिस्थे तु दिवाकरे ।
न कुर्यात्पाणिग्रहणं शेषेषु शोभनं स्मृतम् ॥

पुत्रीपरिणयादूर्ध्वं यावद् दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

एकोदये करतल ग्रहणं प्रशस्त
मेकोदरस्थकरयोः कुलनाशहेतुः ।
एकाब्दके तु विधवा भवतीति कन्या
नद्यन्तरव्यवहिते यदि नाऽत्र दोषः ॥

एवमादि शुभद्वयनिषेध उपनयनात् पूर्वमुक्तः ॥

## ॥ कन्या वरविधिः ॥

स्वबन्धुष्वेव गृह्णीयात् कन्या बुद्धिकुलान्विताम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ॥

किंच—

चतुर्थी वरयेत्कन्या पञ्चमो नतु पञ्चमीम् ।
चतुर्थ्यश्च चतुर्थी यो मातुलस्य पितृष्वसुः ॥

मातुलभूतस्य पितृष्वसृभूतायाश्च कन्यावरयोर्विवाहः शुभ इत्यर्थः ॥ एवमसगोत्रजां सर्वलक्षणसंपन्नां उभयकुलविशुद्धां वरस्य यवीयसीं सजातीयां

कन्या तथाविधः पुरुषः सर्वलक्षण युक्तः श्रुतशीलवृत्तसपन्नः ज्येष्ठो वयसा वरयेत् ॥

अत्राह - दशानुकूलं च मृत्पिण्डलक्षणं गृहे गौलिकावाक्यं तथा काकपिण्डान् उपश्रुतं वरणकाललक्षण यात्रानिमित्तं सुविचार्योद्वहेत् ॥

## ॥ दशानुकूलम् ॥

ज्योतिःशास्त्रोक्त प्रकारेण विचारणीयम् ॥

अथ दुर्ज्ञेयानि लक्षणानि दिनादीनि तानि परीक्षयेत् । प्रशस्ते मुहूर्ते वेद्याः क्षेत्रात् श्मशानाच्च मृत्पिण्डत्रयं गोशकृत् नानाबीजानि मृद्भिः प्रच्छाद्य । देवताग्रे शुचिस्थले देवं संपूज्य पिण्डानभिमन्त्रयते । ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यताम् । यत्सत्यं तद् दृश्यतामिति ॥

अथ कुमारीं ब्रूयात् । एषामेक गृहाणेति, यदि बीजानि गृह्णीयात् धान्यपुत्रवती यदि क्षेत्रं स्पृशेत् श्रीमती यदि गोमयं स्पृशेत् गोमती यदि पुरीषं स्पृशेत् ब्रह्मवर्चसिनी यदिश्मशानं स्पृशेत् विधवा भूयादितिमन्येत ॥

यद्वा अष्टौ पिण्डान् कृत्वा एवं प्रकारेण कुर्यात् । क्षेत्रात् गृह्णीयाच्चेत् अन्नवती प्रजावती भूयात् । गोष्ठात् पशुमती । यदि पुरीषाद्ब्रह्मवर्चसिनी । अविदासिनोह्रदात् सर्वसंपन्ना देवनात् कितवी चतुष्पथात् द्विप्रव्राजिनी । इरिणादधान्या ॥ श्मशानात् पतिघ्नी एव विचार्य कर्तव्यम् ॥

## ॥ अथ गौलीशकुनम् ॥

गत्वा वधूगृहं युग्मा ब्राह्मणाः प्राङ्मुखाः शुभाः वधूज्ञातियुक्ताः तत्र स्थित्वा कार्यं यथार्थतः उच्यतामिति शृण्वन्तु गृहस्य दक्षिणेस्थले वदेत् गौली शुभं ब्रूयादि वेद सुनिश्चितम् । तथा च श्रुतिः — अवक्रंदक्षिणतो ग्रहाणां सुमङ्गलो भद्रवादी शक्रंते? इति ॥

## ॥ अथ वायसबलिः ॥

पूर्वपक्षस्य सप्तम्यामष्टम्यां त्रयोदश्यां पञ्चदश्यां वा ग्रामात् प्राचीं उदीचीं वा दिशमुपनिष्क्रम्य देवालये गोष्ठे नदीतीरे वा गोमयेन स्थण्डिल मुपलिप्य प्रागादिषु चतसृषुदिक्षु मध्ये च काक प्रतिकृति कृत्वा क्रमेण दर्भैरासनानि कल्पयति । अङ्कतेभ्यः कल्पयामि । कंकतेभ्यः कल्पयामि । कद्रुपुत्रेभ्यः कल्पयामि । वायसेभ्यः कल्पयामि । ब्रह्मपुत्रेभ्यः कल्पयामि ॥

तत आवाहयति, न कपिलान्न लोहितान्नाऽरिष्टान्न महारिष्टान् वायसमात्रकान् ॥

आयान्तु शकुनाः शीघ्रा वायसा बलिभोजनाः ।

अङ्कतानावाहयामि । कंकतानावाहयामि । कद्रुपुत्रा नावाहयामि । वायसानावाहयामि । ब्रह्मपुत्रानावाहयामि ॥

अङ्कतादीनामिदमासनं । अंकतादिभ्यो नमः । पाद्यमर्घ्यं माचमनीयम् । अथाद्भिः मार्जयति आपोहिष्ठादिभिः हिरण्यवर्णाभिः पवमानमन्त्रैश्च ॥ अथाद्भिः तर्पयति — अंकतान् तर्पयामी त्यादिभिः । अंकतादिभ्यो नमः इत्यादिभिः गन्धादि । अथ पायसं हविः दध्योदनंवा निवेदयेत - अंकनेभ्यः स्वाहेत्येव मादिभिः ॥ अथ वायसान् ज्ञापयति ॥

सत्याःस्थ सत्यं वदत सत्ये रमत वायसाः ।
यत सत्यमिह तत् ब्रूयात् यो मिथ्या बलि मश्नीयात ॥

अत्रैते मातृघातेन पितृघातेन वा पुनः ।
तद्दुष्कृतं प्रतिगृह्णीया द्यो मिथ्याबलि मश्नीयात् ॥

कपिलानां शतं हत्वा ब्राह्मणानां विशेषतः ।
तद्दुष्कृतं प्रतिगृह्णीया द्यो मिथ्या बलिमश्नीयात ॥

केचिदेवं कुर्वन्ति । आवहन्ती इति पुरोऽनुवाक्यामनूच्य ततो मे श्रियमावहेति याज्यया जुहोतीति ॥ एवं न्यायः सूत्रे नोक्तः । यत्रैकाम्नाता स्यादिति न्यायेन कर्तव्यम् ॥

अथ आज्याहुतीरुपजुहोति । आ मा यन्तु ब्रह्मचारिणः स्वाहा। इति पञ्चभिः ॥

आ मा यन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिण इदम् ॥ यशो जनेऽसानि स्वाहा ॥ यशस इदम् ॥ श्रेयान् वस्यसोऽसानि स्वाहा ॥ श्रेयस इदम् ॥ त त्वा भग प्र विशानि स्वाहा ॥ भगायेदम् ॥ स मा भग प्रविश स्वाहा ॥ भगायेदम् ॥

स्विष्टकृदादि संस्रावान्तं कृत्वा । अग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति — तस्मिन् त्सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा ॥

अथ पक्वादुपादाय प्राश्नाति - यथापः प्रवतायन्ति + स्वाहेति ॥

यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा ॥

प्राश्य अप आचम्य उरः प्रत्यात्मानं प्रत्यभिमृशते ॥

प्रति वेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥

परिषेत्रनादि समाप्य अत्रैवास्ते आनक्षत्राणामुदयात् ॥ अथोदिते—षूपनिष्क्रम्य—पादुके वैणवं दण्डं छत्रमुष्णीषपुस्तकम् ।

गच्छेत् स्नातक आदाय तण्डुलांश्च कमण्डलुम् ॥

गम्यां दिशं उपतिष्ठते - देवीः षडुर्वीः + वीरयध्वमिति ॥

देवीः षडुर्वी रुरुणः कृणोत विश्वे देवास इह वीरयध्वम् ॥

मा हास्महि प्रजया मा तनूभिः इति नक्षत्राण्युपतिष्ठते ॥

चन्द्रमस मुपतिष्ठते — मा रधाम द्विषते सोम राजन् ॥ इति ॥

## ॥ अथ तूष्णीं समावर्तनम् ॥

पूर्वोक्ते (पूर्वेद्युः) नान्दीमुखादि चतुष्टयं च आचार्यमुखेन कृत्वा स्नास्यामीति ॥

अग्निमुपसमाधाय संपरिस्तीर्य आज्यं संस्कृत्य पालाशीं समिधं आज्येनाक्त्वाऽभ्यादधाति । इमं स्तोममित्यृचा ॥

वपनादि छत्रादानान्त तूष्णीं कृत्वा ॥

## ॥ अथ शिष्यायाचार्यो मधुपर्कं दद्यात् ॥

अथ रथस्य दक्षिणं चक्रमभिमृशति — रथन्तरमसीति । सव्यं चक्रं बृहदसीति ॥ रथस्य मध्यममभिमृशति वामदेव्यमसीति ॥ रथ प्रवर्तमानमभिमन्त्रयते-अयं वा मश्विना रथो मा दुःखे मा सुखे रिषत् इति ॥ रथाभावे अप उपस्पृश्य भूमिमभिमृशति-इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिति ॥*

अप उपस्पृश्य हृदयमभिमृशति — मयीन्द्रियं वीर्यम् । इति ॥

* अय मन्त्रः श्रौतसूत्रे 17 प्रश्ने 12 अध्याये मधुपर्क प्रकरणे इत्थं दृश्यते इह धृति....रमतिरिह रमताम् ॥ इति

अपो व्रीहिभिः यवैर्वा संमिश्र शिष्याय प्रयच्छति। स प्रतिगृह्णाति आम आगाद्वर्चसा + पशूनामिति ।

आ म आगाद्वर्चसा यशसा स ँ सृज पयसा तेजसा च । तं मा प्रियं प्रजानां कुर्वधिपति पशूनाम् ॥ इति तदुपस्पृश्य वदेत् ॥ प्राक्सिक्तं तज्जलं पुरस्तात्सिञ्चति ॥

दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदक क्षीरमिश्रं वा मधुपर्क इति निवेदयेत् ॥ तदभिमन्त्रयते - स माऽवतु स माऽवन्तु स मा जुषता इति ॥ हस्ताभ्यां प्रतिगृह्णाति - आम आगाद्वर्चसा + पशूनामिति ॥ अर्घ्यपतितं तृणमङ्गुष्ठेन महानाम्न्याच नैर्ऋत्यां दिशि निरस्यति नेष्टाविद्धि + द्विष्म इति ।

नेष्टा विद्धि कृन्तामि या ते घोरा तनूः । तया तमाविश योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥

अपः स्पृष्ट्वा सर्वाभिः अङ्गुलीभिः समुदायुत्य प्राश्नाति—इदंतेबलं हरामीति प्रथमं । श्रेष्ठ माऽधिपति कुर्विंतिद्वितीयं । सोमोऽसि सोमपं मा कुर्विंति तृतीयम् । अन्नमस्यन्नं मा कुर्विति चतुर्थम ॥ यमात्मनः श्रेयासमिच्छेत् तस्मै शेषं दद्यात् ॥

गामनुमन्त्रयते – जहि मे पाप्मानमुपवेत्तुः इति ॥ अथगामुत्सृजेत् – गौर्धेनुभव्या + ओं उत्सृजतेति ॥

गौर्धेनुभव्या माता रुद्राणां दुहिता वसूना ँ स्वसाऽऽदित्याना ममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागा मदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु । ओमुत्सृजत ॥

ओदनमाहृतं प्राश्नाति - ब्रह्मन्त्वाऽश्नामि इति ॥ उदकमिश्रं सक्तुं आहृतमश्नाति — ब्रह्मन्त्वाऽश्नामि इति ॥ *

एवं जड बधिर मूकान्धकुब्जादीनाम् ॥

अशक्तस्तूष्णी समिधमाधाय शेषं तूष्णीमाचरेत् ॥

समावर्तन प्रभृति सायं प्रातः आज्येन व्याहृतिभिरेव होमः । औपासनो दण्डः कमण्डलुरुपानहौ छत्रं द्वे वाससी द्वे यज्ञोपवीते उष्णीषमजिनमन्तर्वास इति नित्यानि ॥

विवाहार्थं स्नातकः तस्मिन् दिवसे पाणिग्रहणं कुर्यात ॥

## ॥ अथ परिवेदनम् ॥

दाराग्निहोत्र संयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ इति ।

परिवित्तिः परिवेत्ता यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृ याजक पञ्चमाः ॥

ज्येष्ठाया सत्यनूढाया येनाग्रं गृह्यतेऽनुजा ।?
सैवाऽग्रेदिधिषूर्ज्ञेया पूर्वजा दिधिषूस्मृता ॥

एकमातृप्रसूताना भ्रातृणा परिवेदने ।
दोषः स्यात सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

परिवेत्रादि दोषाभावमाह—

उन्मत्तः किल्बिषी ज्येष्ठो जात्यन्धः क्लीब एव वा ।
राजयक्ष्ममयोपि स्यात् न दोषः परिवेदने ॥

अत्र जात्यन्ध इति वचनात् कालान्तरे संभूतस्यापि न दोषः ।

* अत्र मधुपर्क विषयमधिकृत्य यथाकोशं मया ग्रथितम् ॥

धर्मसारेऽपि—

षण्डान्ध पतित स्तब्ध जड गद्गद पङ्गुषु ।
ज्येष्ठेषु सोदरेष्वेव न दोषः परिवेदने ॥

काश्यपः—

उन्मत्तः पतितः कुष्ठी तथा षण्डस्तु सोदरः ।
चक्षुःश्रोत्र विहीनश्च तथाऽपस्मारदूषितः ॥
पाणिपाद विहीनो वा न दोषः परिवेदने ॥

कात्यायनः—

देशान्तरस्थ क्लीबैकपादहस्तांश्च सोदरान् ।
वेश्यादिसक्त पतित शूद्रकल्पादि(ति) रोगिणः ॥
जडमूकान्ध बधिर कुब्जवामन को(खे)टकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपेषु च ॥
धनुर्वृत्ति(धनवृद्धि) प्रसक्तांश्च कामतः पापचारिणः ।
कुहकोन्मत्तचो(चो)राश्च परिवेत्ता न दुष्यति ॥

कोटो भग्नपादः, अथ शातातपः—

क्लीबे देशान्तरस्थे वा पतिते भिक्षुकेऽपिवा ।
योगशास्त्रप्रयुक्ते वा न दोषः परिवेदने ॥

एवमादि वचनैः परिवेत्तुः परिवेदकस्य च दोषाभावः प्रतिपादितः ॥

तथाऽग्रेदिधिषु दिधिष्वोश्च ॥ — अथ धर्मः ॥

परिवित्तः परिवेत्ता या चैनं परिविन्दति ।
सर्वे ते नरकं यान्ति दाता याजकपञ्चमाः ॥

परिवित्तः परिवेत्ता दाता यश्चापि याजकः ।
कृच्छ्रद्वादशरात्रेण त्रिरात्रेण विशुध्यति ॥

एव कृच्छ्रं कृत्वा प्रायश्चित्तं मिन्दाहुती जुहुयात ॥
तथैवाऽग्रेदिधिषूपतिरपि प्रायश्चित्तं कुर्यात् ॥

परिवित्तः परिवेत्ता तयोः दातारौ याजकश्च इति पञ्च ॥ अग्रेदिधिषूः दिधिषुः द्वयोर्भ्रातरौ द्वयोर्दाता याजकः षट् । एते सर्वेऽपि प्रायश्चित्तयोग्याः ॥ तस्मादेकस्मात् प्रसूतानां स्त्रीपुरुषाणां कर्मणि उक्तप्रकारेण दोषाभावः ॥ पुरुषाणां क्रमेण तत्तत्कर्माणि कार्याणि ॥

सर्वे मासा विवाहस्य शुचितपस्तपस्य वर्ज्यमिति सूत्रकारः ॥

कुंभ कन्या धनुः कर्किराशिस्थे तु दिवाकरे ।
न कुर्यात्पाणिग्रहणं शेषेषु शोभनं स्मृतम् ॥

पुत्रीपरिणयादूर्ध्वं यावद् दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

एकोदये करतल ग्रहणं प्रशस्त
मेकोदरस्थकरयोः कुलनाशहेतुः ।
एकाब्दके तु विधवा भवतीति कन्या
नद्यन्तरव्यवहिते यदि नाऽत्र दोष. ॥

एवमादि शुभद्वयनिषेध उपनयनात् पूर्वमुक्तः ॥

## ॥ कन्या वरविधिः ॥

स्वबन्धुष्वेव गृह्णीयात् कन्या बुद्धिकुलान्विताम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात ॥

किंच—

चतुर्थीं वरयेत्कन्या पञ्चमो नतु पञ्चमीम् ।
चतुर्थ्यश्च चतुर्थीं यो मातुलस्य पितृष्वसुः ॥

मातुलभूतस्य पितृष्वसृभूतायाश्च कन्यावरयोर्विवाहः शुभ इत्यर्थः ॥ एवमसगोत्रजां सर्वलक्षणसंपन्नां उभयकुलविशुद्धां वरस्य यवीयसीं सजातीयां

कन्या तथाविधः पुरुषः सर्वलक्षण युक्तः श्रुतशीलवृत्तसंपन्नः ज्येष्ठो वयसा वरयेत् ॥

अत्राह - दशानुकूलं च मृत्पिण्डलक्षणं गृहे गौलिकावाक्यं तथा काकपिण्डान् उपश्रुतं वरणकाललक्षण यात्रानिमित्तं सुविचार्योद्वहेत् ॥

## ॥ दशानुकूलम् ॥

ज्योतिःशास्त्रोक्त प्रकारेण विचारणीयम् ॥

अथ दुर्ज्ञेयानि लक्षणानि दिनादीनि तानि परीक्षयेत् । प्रशस्ते मुहूर्ते वेद्याः क्षेत्रात् श्मशानाच्च मृत्पिण्डत्रयं गोशकृत् नानाबीजानि मृद्भिः प्रच्छाद्य । देवताग्रे शुचिस्थले देवं सपूज्य पिण्डानभिमन्त्रयते । ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यताम् । यत्सत्यं तद् दृश्यतामिति ॥

अथ कुमारी ब्रूयात् । एषामेकं गृहाणेति, यदि बीजानि गृह्णीयात् धान्यपुत्रवती यदि क्षेत्रं स्पृशेत् श्रीमती यदि गोमयं स्पृशेत् गोमती यदि पुरीषं स्पृशेत् ब्रह्मवर्चसिनी यदिश्मशानं स्पृशेत् विधवा भूयादितिमन्येत ॥

यद्वा अष्टौ पिण्डान् कृत्वा एवं प्रकारेण कुर्यात् । क्षेत्रात् गृह्णीयाच्चेत् अन्नवती प्रजावती भूयात् । गोष्ठात् पशुमती । यदि पुरीषाद्ब्रह्मवर्चसिनी । अविदासिनोह्रदात् सर्वसंपन्ना देवनात् कितवी चतुष्पथात् द्विप्रव्राजिनी । इरिणादधान्या ॥ श्मशानात् पतिघ्नी एवं विचार्य कर्तव्यम् ॥

## ॥ अथ गौलीशकुनम् ॥

गत्वा वधूगृहं युग्मा ब्राह्मणाः प्राङ्मुखाः शुभाः वधूज्ञातियुक्ताः तत्र स्थित्वा कार्यं यथार्थतः उच्यतामिति शृण्वन्तु गृहस्य दक्षिणेस्थले वदेत् गौली शुभं ब्रूयादि वेद सुनिश्चितम् । तथा च श्रुतिः — अवक्रंदक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुंते ! इति ॥

## ॥ अथ वायसबलिः ॥

पूर्वपक्षस्य सप्तम्यामष्टम्यां त्रयोदश्यां पञ्चदश्यां वा ग्रामात् प्राचीं उदीचीं वा दिशमुपनिष्क्रम्य देवालये गोष्ठे नदीतीरे वा गोमयेन स्थण्डिल मुपलिप्य प्रागादिषु चतसृषुदिक्षु मध्ये च काक प्रतिकृति कृत्वा क्रमेण दर्भैरास-नानि कल्पयति । अङ्कतेभ्यः कल्पयामि । कंकतेभ्यः कल्पयामि। कद्रुपुत्रेभ्यः कल्पयामि । वायसेभ्यः कल्पयामि । ब्रह्मपुत्रेभ्यः कल्पयामि ॥

तत आवाहयति, न कपिलान्न लोहितान्नाऽरिष्टान्न महारिष्टान् वायस-मात्रकान् ॥

आयान्तु शकुनाः शीघ्रा वायसा बलिभोजनाः ।

अङ्कतानावाहयामि । कंकतानावाहयामि । कद्रुपुत्रा नावाहयामि । वायसानावाहयामि । ब्रह्मपुत्रानावाहयामि ॥

अङ्कतादीनामिदमासनं । अंकतादिभ्यो नमः । पाद्यमर्घ्यं माचमनीयम् । अथाद्भिः मार्जयति आपोहिष्ठादिभिः हिरण्यवर्णाभिः पवमानमन्त्रैश्च ।। अथाद्भिः तर्पयति — अंकतान् तर्पयामी त्यादिभिः । अंकतादिभ्यो नमः इत्यादिभिः गन्धादि । अथ पायसं हविः दध्योदनंवा निवेदयेत् - अंकतेभ्यः स्वाहेत्येव मादिभिः ॥ अथ वायसान् ज्ञापयति ॥

सत्याःस्थ सत्य वदत सत्ये रमत वायसाः ।
यत् सत्यमिह तत् ब्रूयात् यो मिथ्या बलि मश्नीयात ॥

अत्रैते मातृघातेन पितृघातेन वा पुनः ।
तद्दुष्कृतं प्रतिगृह्णीया द्यो मिथ्याबलि मश्नीयात् ॥

कपिलानां शतं हत्वा ब्राह्मणानां विशेषतः ।
तद्दुष्कृतं प्रतिगृह्णीया द्यो मिथ्या बलिमश्नीयात ॥

अथ दूरतो निरीक्षते—

भावाय पूर्वं गृह्णीयात् अभावायैव दक्षिणम् ।
नास्तीत्यपर गृह्णीयात् उत्तरः कार्यसिद्धये ॥
मध्ये तु सर्वलाभाय ज्ञात्वा कार्यं समाचरेत् ॥

## ॥ उपश्रुतिकल्पः ॥

आदित्यागारवारे वा पक्षद्वयचतुर्थ्यामष्टम्या चतुर्दश्या [पञ्चदश्या वा] भरण्या कृत्तिकायां वा क्रियेत ॥ पूर्वे ु: एक [अकृत] भुक्तः श्वोभूते शुचिर्दिने वा अनश्नन् प्रदोषे अग्निमुपसमाधाय संपरिस्तीर्याज्यं संस्कृत्य दक्षिणतोऽग्ने-रुपश्रुति देवीमावाहयेत् । ओं भूः रात्रीन्देवीमावाहयामि । ओ भुवः उपश्रुतिं देवी आवाहयामि । ओं सुवः महारात्री देवीमावाहयामि । ओ भूर्भुवस्सुवः महाकालरात्री देवीमावाहयामि । रात्र्यादि देवीनामिदमासनम् । पाद्यमर्घ्य माचमनीयं च दत्वा स्नापयति । आपोहिष्ठेति तिसृभिः हिरण्यवर्णा इति चतसृभिः पवमान इत्यनुवाकेन च मार्जयित्वा,रात्री देवीं तर्पयामीत्यादिभिस्तर्प-यित्वा, कृष्णवर्णैः गन्धादिभिरभ्यर्च्य अथाग्नि परिषिच्यालंकृत्य समिधमाधायाज्या हुतीर्जुहोति स्रुवेण ॥

रात्र्यै देव्यै स्वाहा । उपश्रुत्यै देव्यै स्वाहा । महारात्र्यै देव्यै स्वाहा । महाकालरात्र्यै देव्यै स्वाहा । निशायै, क्षपायै, कृष्णायै, अन्धकारिण्यै, यत इन्द्र, स्वस्तिदा विशस्पतिः [32पृष्ठे] इति च हुत्वा परिषिच्य अथोत्थाय रात्री उपतिष्ठते । रात्रीव्यख्यदायती - उपतेगाइवाकरमिति द्वाभ्याम् ॥

रात्री व्यख्य दायती। पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियोऽधित ॥

उप ते गा इवाऽकरम् । वृणीष्व दुहित दिंवः । रात्री स्तोम न जिग्युषी ॥

अथ उप श्रुतिदेवीमुद्वासयेत् । ओं भूः रात्रिदेवीमुद्वासयामीत्यादिभिः ॥ ततः श्रोत्रियगृहं देवालयं श्मशानं कुलालगृहं वा प्रति गत्वा नवधनुर्मात्रात् पूर्वं कर्णौ पिधाय तत्र गत्वा कर्णौ विसृजेत् स्वस्ति न इन्द्रो वृद्धश्रवाः इति ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति

नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

तत्र श्रुतं गृहीत्वा तदनुरूपेण कार्यं कुर्यात् ॥

## ॥ अथकन्यावरणम् ॥

युग्मान् ब्राह्मणान् वरान् प्रहिणोति प्रसुग्मन्ता इत्यृचा ॥

प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वरां अभि षु प्रसीदत ।

अस्माक मिन्द्र उभयं जुजोषति यत् सौम्यस्याऽन्धसो बुबोधति ॥

यतोऽनुमन्त्रयते अनृक्षरा इत्यृचा ॥

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् ।

समर्यमा सं भगो नो निनीयात् सञ्जास्पत्यं सुयम मस्तु देवाः ॥

यात्राकालनिमित्तानि पक्षि गौली द्विजातिभिः ।
ज्ञात्वा राद्भिस्ततो गत्वा वरयेत् कन्यका बुधः ॥

## ॥ वधूगृहे कन्यालक्षणम् ॥

सुप्ता तथार्तां च विकीर्णकेशीम्
रुदतीं च काष्ठाग्निकरा न(स)दीपाम् ।

क्रूरा च दुर्वाक्ययुता विलक्षणा
दृष्ट्वांगहीना वरयेन्न कन्यकाम् ॥

एवं विचार्य शोभन सदीपशुचिः भूत्वा गृहं गत्वा सर्वलक्षणसंपन्ना कन्या पितुरङ्के आसीना वरयेयुर्द्विजाः— पराशरगोत्राय देवदत्तशर्मणः पौत्राय यज्ञदत्तशर्मणः पुत्राय हरदत्तशर्मणे वराय, भारद्वाज गोत्रजां शंकरशर्मणः पौत्रीं दिवाकरशर्मणः पुत्री पार्वतीनाम्नी भवदीयामिमां कन्यां धर्मप्रजार्थं वृणीमहे ॥

दास्यामीति प्रतिवचनम् ॥ **ब्राह्मणान् संपूज्य** आशिषो वाचयित्वा व्रजेयुः ॥

कन्यावरणकाले कन्यादाता वराय फलदानं कुर्यात् इति केचित् । फलदान मन्त्रः—तुभ्यं दास्यामि मत्कन्यां ब्राह्मेण विधिना वर । व्रतादीनि यथाशास्त्रं कृत्वाऽऽगच्छ गृहं मम ॥

## ॥ अथाष्टौ विवाहा ॥

श्रुतवृत्त लक्षणसंपन्नाय ब्रह्मचारिणेऽर्थिने अलंकृत्य कन्यामुदकपूर्वां दद्यात् । एष ब्राह्मो विवाहः ॥ तस्या जातः द्वादश पूर्वान् द्वादश परान् पुनात्युभयतः ॥

अथान्तर्वेदि ऋत्विजे दक्षिणासु नीयमानासु दद्यात् स दैवः॥ तस्यां जातः दश पूर्वान्दशापरान् पुनात्युभयतः ॥

सह धर्मं चरत इति प्राजापत्यः ॥ अष्ट पूर्वानष्टपरान् पुनात्युभयतः ॥

गोमिथुनं दत्वोपयच्छेत स आर्षः ॥ सप्त पूर्वान् सप्त परान् पुनात्युभयतः ॥

अत्र धर्मवचनं — ब्राह्म दैव प्राजापत्यार्षविवाहाश्चत्वारः पूर्वः पूर्वः श्रेयानिति ॥

सकामेन सकामाया मिथः संयोगः स गान्धर्वः ॥

धनेनोपतोष्य उपयच्छेत स आसुरः ॥

हत्वा भित्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् । स राक्षसः ॥

सुप्तां मत्तां प्रमत्तां वा अपहरेत् स पैशाचः ॥ एते चत्वारः निन्द्याः न ब्राह्मणविषयाः ॥

पूर्वेद्युः नान्दीमुख मुदकशान्ति प्रतिसर गृहयज्ञं च कुर्यात् । अङ्कुरार्पणं तु सद्यःकाल पक्षे प्रधानकर्म दिवा यदि कुर्यात् तदा दिवा कार्यम् । यदि रात्रौ कुर्यात् तदा रात्रौ कर्तव्यम् ॥

विवाहे क्षौरं कर्तव्य तथाह—

दारकर्मणि मृते च सूतके
कन्यका कटक कुंभधन्विते ।
यागदीक्षण विधौ नृपेष्टतः
भास्करेऽपि वपनं विधीयते ॥

समावर्तनदिवसे विवाहश्चेत् तदा समावर्तने क्षौरं मन्त्रवत् कुर्यात् ॥

## ॥ यक्षिबलिः ॥

अथ नियमः— स्नातोऽहतवासा गन्धानुलिप्तः स्रग्वी भुक्तवान् प्रतोद पाणिः अपदातिर्गत्वा वधूज्ञातिभिः अतिथिवदभ्यर्चितः भुक्त्यनंतर गृहद्वार प्रदेशे यक्षिबलिं कुर्यात् । उद्वाहाङ्गं यक्षिबलि करिष्ये । सर्पबिले अपा समीपे गृहद्वारे वा द्वे स्त्रीप्रतिकृती कृत्वा यक्षिणी देवते आवाहयामीत्यावाहनादिभिः अभ्यर्च्य मन्त्रद्वयेन बलिद्वयं दद्यात् । ते सूनवः ते मायिन इति द्वाभ्याम् ॥

ते सूनवः स्वपसः सुदंससो महीजज्ञु मातरा पूर्वचित्तये । स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पद मद्वयाविनः ॥

ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा ।

नव्यं नव्य तन्तु मातन्वते दिवि समुद्रे अन्तः कवय. सुदीतयः ॥

यक्षिणीदेवते प्रीयेतामिति पुण्याहम् ॥ अत्र द्यावापृथिवी देवते इतिकेचित् दिवं पृथिवीमित्यावाहनम् । दिवे नमः पृथिव्यै नमः इत्यासनादि । द्यावापृथिवी प्रीयेतामिति पुण्याहम् ॥

अथ विवाहार्थं पूर्ववदलंकृत्य—

रथे गजे वा खट्वाया वाद्यदुंदुभिसंयुतः ।
स्वस्तिवाचन संयुक्तः बन्धुवर्ग समन्वितः ॥

कन्यागृहबहिद्वारं पूर्णकुंभाद्यलंकृतम् ।
रमामङ्गलसंयुक्त गत्वा डोलागतां वधूम् ॥

सुवीक्ष्य सुक्रियां कृत्वा मुहुः कन्यावरौ मिथः ।
कन्यावधू जनास्तत्र कुर्युः नीराजनक्रियाम् ॥

अन्नपिण्डैः हरिद्राङ्कैः पूर्णकुंभैः प्रदक्षिणम् ।
अपराती उपेयाता होमस्थानं तु दंपती ॥

## ॥ अत्र कन्यानियमः ॥

स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणी भुक्तवती इषुहस्तां दत्ता वधू समीक्षते । इति वधून्यायः । वरप्रेषणमन्त्रं वा कुर्यात् ॥

ब्राह्मे च प्राजापत्ये च किन्तु चार्षे त्रयेष्वपि ।
वरान् संप्रेषयेद्विद्वान् दैवे नास्ति विवाहके ॥

## ॥ मधुपर्कः ॥

वधूज्ञातिभिः अतिथिवदर्चित इति वराय मधुपर्कं कुर्यात् ॥ एते मधुपर्कयोग्याः श्वशुरपितृव्यमातुलाचार्यस्नातक प्रियाश्च यज्ञादौ ऋत्विग्भ्यः प्रधानेभ्यश्च विवाहे वराय संवत्सर पर्यागतेभ्यः। दृष्टमात्रेण राज्ञे मधुपर्कं कुर्यात्। तस्य प्रयोगः—

गृहमध्ये शुचौ देशे उदीचीनाग्रा एरका आस्तीर्य तासु उदीचीनदशान्यहतानि वासांस्यास्तीर्य वरादयः प्राङ्मुखाः उपविशन्ति। उत्तरपूर्वदेशेऽगारस्य प्रागग्रान् दर्भान् संस्तीर्य तेष्वर्घ्य द्रव्याणि युगपत्सादयेत्। यावन्त ऋत्विजः तावन्ति कांस्यानि पात्राणि सादयित्वा पवित्रे कृत्वा तूष्णीं संस्कृत्य ताभिरद्भिः उत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरः पवित्रं मध्वानयति। दधि पयो वा द्वितीयं व्रतं। घृतं तृतीयं यद्वितीयं तच्चतुर्थं आपः पञ्चमीः ॥ वर्षीयसा तेजोमयेन अपिधाय कूर्चेनापिधाय वरसमीपं गत्वा कूर्चं प्रदर्शयेत्। कूर्च इति प्राह। सुकूर्च इति वरो गृहीत्वा प्रदक्षिणमावृत्य उदगग्रं निधाय तस्मिन्नु पविशेत्। राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषं इति ॥

उदकपात्रमादाय कूर्चाभ्यां परिगृह्य पाद्या आप इति प्राह—ता अभिमन्त्रयते। आपः + असानीति।

आपः पादावनेजनी द्विषन्तं नाशयन्तु मे। अस्मिन् कुले ब्रह्मवर्चस्यसानि ॥

दक्षिण पादं पूर्वं प्रक्षालयेत् ब्राह्मणः। सव्यं शूद्रः। भार्या अभिषिञ्चति। समस्त संपदित्यादि—

समस्त संपत् समवाप्तिहेतवः समुत्थितापत्कुल धूमकेतवः। अपार संसार समुद्र सेतवः पुनन्तु मां ब्राह्मणपाद पांसवः ॥

आपद्घन ध्वान्त सहस्रभानवः समीहितार्थार्पण कामधेनवः। समस्त तीर्थाम्बु पवित्रमूर्तयो रक्षन्तु मा ब्राह्मण पाद पांसवः ॥

आधि व्याधिहरं नृणा मृत्यु दारिद्रय नाशनम्।
श्रीपुष्टि कीर्तिदं वन्दे विप्र श्रीपाद पङ्कजम ॥
(विप्रौघ दर्शनात् सद्यः क्षीयन्ते पापराशयः।
वन्दनान्मङ्गलाऽवाप्तिः अर्चनादच्युतं पदम् ॥)

अवनेक्तुः पाणी संमृशति—मयि महो मयि भगो मयि भर्गो मयि यशः इति ॥ अप उपस्पृश्य मयीन्द्रियं वीर्यम् इत्युरः प्रत्यात्मानं प्रत्यभिमृशते ॥

अपो व्रीहिभिः समुदायुत्य तथैव कूर्चाभ्यां परिगृह्य अर्हणीया आप इति प्राह—ता अभिमन्त्रयते आम आगा + पशूनामिति

आ म आगाद्वर्चसा यशसा स॰सृज पयसा तेजसा च। तं मा प्रियं प्रजाना कुर्वधिपति पशूनाम् ॥

एकदेशमञ्जलावानीयमान मनुमन्त्रयते — विराजोऽसि + राजेति

विराजोऽसि विराजो दोह मशीय मम पद्याय विराज ॥

अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते—समुद्रंवः + पय इति ॥

समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनि मपि गच्छत।

अच्छिद्रः प्रजया भूयासं मा परा सेचि मत् पयः ॥

उदकपात्र मादाय तथैव कूर्चाभ्यां परिगृह्य उपस्तरणीया आप इति प्राह। ताः पिबति—अमृतोपस्तरणमसीति ॥ त्रिराचामेत्। त्रिः परिमृजेत् ॥

द्विःक्र्यंके ॥ आचान्तायाऽपावृत्ताय तथैव कूर्चाभ्यां परिगृह्य मधुपर्क इति प्राह । तमनुमन्त्रयते — त्र्य्यै विद्यायै + पशूनामिति

त्र्य्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि ।

तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥

तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति—देवस्यत्वा +प्रतिगृह्णामीति

देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां

प्रतिगृह्णामि ॥

मधुपर्कस्थतृणमङ्गुष्ठेन महानाम्न्या चोपसंगृह्य नैर्ऋत्यां दिशि निरस्यति। नेष्टा + द्विष्म इति [21७] अप उपस्पृश्य

सर्वाभिरंगुलीभिःसमुदायुत्य प्राश्नाति। यन्मधुनो +ऽसानीति ।

यन्मधुनो मधव्यं परम मन्नाद्य वीर्यम् । तेनाहं मधुनो मधव्येन

परमेणाऽन्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि ॥

त्रिःप्राश्य, सकृन्मन्त्रेण द्विस्तूर्ष्णी शेषमिष्टाय दद्यात् ॥ आचान्तायापावृत्ताय तथैवकूर्चाभ्यां परिगृह्यापिधानीया आप इति प्राह ताः पिबति—अमृतापिधान मसीति ॥ त्रिराचामेत् । त्रिः परिमृजेत् ॥

गां दर्शयेत् गौरिति ॥ वरो गामनुमन्त्रयते । गौरस्य

पहत पा'माऽप पाप्मानं नुद मम च देवदत्तशर्मणश्च इति *दातुर्नाम गृह्णाति ।

गोदान मन्त्रः—गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । तस्मादस्याः प्रदानेन अतः शाति प्रयछ मे ॥ अस्मैवराय अमुकशाखाध्यायिने अमुकशर्मणे प्रतिग्रहीत्रे मधुपर्कपूजाङ्गं परमेश्वरप्रीत्यर्थं इमां गा सदक्षिणा तुभ्यमहं संप्रददे न मम ॥ प्रतिग्रहमन्त्रः — देवस्यत्वा + प्रतिगृह्णामि । राजात्वा वरुणोनयतु देविदक्षिणे रुद्रायगां । तयामृतत्वमश्या + प्रतिगृह्णातु । इति

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्या प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणे रुद्राय गाम् । तयाऽमृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिग्रहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामꣳ समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा। उत्तानस्त्वा ऽऽङ्गीरसः प्रतिगृह्णातु ॥

गामुत्सृजेत् । गौर्धेनुभव्या + ओमुत्सृजतेति[219]॥ अत्र मधुपर्कवपाहोमस्तु गवालभनस्य कलिनिषिद्धत्वान्नास्ति ॥ अथ अन्नं दर्शयेत् भूतम् इति प्राह् । तदभिमन्त्रयते—सुभूतं । सा विराट् तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं धाः । ओ कल्पयत ॥ चतुरो नानागोत्रान् भोजयत इति वदेत् । तदन्नं

प्राश्नाति–विराडसि विराडन्न विराड् विराजो मयि धेहि इति।

भुक्तब्राह्मणेभ्यो वस्त्रयुगानीत्यादि दद्यात् ॥

एवं सर्वेषां मधुपर्कयोग्यानां कुर्यात्।

कन्याशुल्कं तु यत्किंचित् स्तन्य(तत्र)मूलमितीरितम्। ?
दाता चेत् प्रतिगृह्णीयात् तस्मै दद्यात्तदा वरः ॥

न चेदासुर उद्वाह कन्यादानेन किंफलम् ॥

॥ अथ कन्या दातारः ॥

पिता दद्यात्स्वयं कन्यां पितृव्यः सोदरोऽपिवा।
पितामहो मातुलो वा पितामह सकुल्यकः ॥

सपिण्डो जननीबन्धुः पूर्वाभावे परःपरः।
जलदा जननी भ्रात्री ज्येष्ठा पत्नी पितामही ॥

मातामही मातुलानी पितृव्यस्त्री सकुल्यका ॥

अद्य पूर्वोक्त एवं गुण + शुभतिथौ मम दशानां पूर्वेषां दशानां परेषां आत्मनश्च एकविंशति कुलोत्तारण द्वारा नित्य निरतिशयानन्द शाश्वत ब्रह्मलोकावाप्त्यर्थं ब्राह्मेन विधिना कन्यका दानाख्यमहादानं करिष्ये ॥

प्राङ्मुखस्य वरस्याङ्घ्री दाता प्रक्षालयेत्त्रयम्।
आच्छाद्य नववस्त्रेण हस्तौ कर्णौ च भूषयेत् ॥

वरस्तु प्राङ्मुखस्तिष्ठेत् वधूः प्रत्यङ्मुखी भवेत्।
तिष्ठन्दाता हिरण्याद्भिः सह दद्याद्वराय ताम् ॥

लवणानि हरिद्राणि व्रीहींश्च सर्षपास्तथा।
मुद्गाङ्कुराणि निक्षिप्य पदं तेषु वधूं नयेत् ॥

वरस्य गोत्रमादाय प्रथमं सविचक्षणः ।
कन्यागोत्रं ततो दद्यात् हिरण्योदक पूर्वकं ॥

तत्तद्गोत्राय पौत्राय पुत्राय शर्मणे तथा ।
तत्तज्जगोत्रजा पौत्री पुत्री श्रीदामिमामिति ॥

त्रिपूरुषं च दम्पत्योः ब्रूयाद्दाने विशेषतः ॥
गोदाने कन्यकादाने तिष्ठन्नेव प्रतिग्रहः ।
पुच्छं केशं करं स्पृष्ट्वा दद्यात्तिष्ठन् क्रमेण तु ॥

प्रागाननो वरस्तिष्ठेद्वधूः प्रत्यङ्मुखी तथा ।
उदङ्मुखी तु जननी कन्यादानेष्वयं विधिः ॥

॥ अथ दानमन्त्रः ॥

कन्या कनक संपन्नां कनकाभरणैर्युताम ।
दास्यामि शंभवे तुभ्यं ब्रह्मलोकजिगीषया ॥

विश्वंभराः सर्वभूताः साक्षिण्यः सर्वदेवताः ।
इमा कन्या प्रदास्यामि पितॄणा तारणाय च ॥

इमा मदीयां कन्या प्रजा सहत्वकर्मभ्यः प्रतिपादयामि। तुभ्यमहं संप्रददे न मम ॥ वरस्तु — देवस्य त्वा + प्रतिगृह्णामि। राजा त्वा + प्रति गृह्णातु इति वदेत् ॥

दैवविवाहे दक्षिणाभिः सह दत्ता स्याद्यदि तदा प्रतिगृह्य प्रजापति स्त्रियां यश इति षड्भिरनुच्छन्दसं जपेत् ।

प्रजापतिः स्त्रियां यशः । मुष्कयो रदधात्सपम् ।
कामस्य तृप्तिं मानन्दम् । तस्याऽग्ने भाजयेह मा ॥

मोदः प्रमोद आनन्दः । मुष्कयो र्निहितः सपः ।

सृत्वेव कामस्य तृप्याणि । दक्षिणानां प्रतिग्रहे ॥

मनस श्चित्तमाकूतिम् । वाचः सत्य मशीमहि ।

पशूना॑ रूपमन्नस्य । यशः श्रीः श्रयता मयि ॥

यथाह मस्या अतृप॑ स्त्रियै पुमान् । यथा स्त्री तृप्यति पु॑सि

प्रिये प्रिया । एव भगस्य तृप्याणि । यज्ञस्य काम्यः प्रियः ॥

ददामीत्यग्निर्वदति । तथेति वायुराह तत् ।

हन्तेति सत्य चन्द्रमाः । आदित्यः सत्यमोमिति ॥

आपस्तत् सत्य माभरन् । यशो यज्ञस्य दक्षिणाम् ।

प्रजा (असौ) मे कामः समृद्ध्यताम् ॥

तत्र दाता जपेत् ।

रुक्म ..शो निपतति सकृत्कन्या प्रदीयते ।

सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥

कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वतः ।

कन्ये मे पृष्ठतो भूयाः त्वद्दानान्मोक्षमाप्नुयाम् ॥

कन्यादानानुदानानि यथाशक्ति कुर्यात् । तथाह—

दासीदासगृहक्षेत्रं यत्किंचिद्वा यथाफ(ब)लम् ।
कन्यादानानुदानानि जामात्रे तु समर्पयेत् ॥

वरः कन्यां प्रतिगृह्य अद्य पूर्वोक्त + शुभतिथौ उद्वाह कर्म करिष्ये इति संकल्प्य अग्निः प्रीयतामिति पुण्याहं कुर्यात् ॥

## ॥ अथ मन्त्रवस्त्रम् ॥

क्षौमं वा रक्तवस्त्रं वा मन्त्रवासस्सुशोभनम् ।
बहुप्रजावती नारी धारयेज्जीवभर्तृका ॥

स्वामा तनूराविश शिवो मा तनूराविश इति धारयेत् ॥

## ॥ माङ्गल्य सूत्रम् ॥

निष्कं हेम तदर्धं वा तदर्धं वा तदर्धतः ।
माङ्गल्या(मङ्गला)ख्यं मणि कुर्यात् तन्न्यूनं चेदशोभनम् ॥
हेमा[रुन्धति] (जति)सूत्रेतन्तुसूत्रेऽथवा नयेत्? ।
भर्ता तदा वधूकण्ठे बध्नीयाद्वा सुमङ्गली ॥

मन्त्रः—

माङ्गल्यं तन्तुनाऽनेन मम (भर्तृ)जीवनहेतुना ।
कण्ठे बध्नामि सुभगे त्वं जीव शरदःशतम् ॥

कन्यादानमितः पूर्वं चरेद्यदि पुण्याहानन्तर वस्त्रादीन् धारयेत् ॥

अथ वधूं समीक्षते । अभ्रातृघ्नी + सुवेति

अभ्रातृघ्नीं वरुणाऽपतिघ्नीं बृहस्पते । इन्द्राऽपुत्रघ्नीं लक्ष्यं तामस्यै सवितः सुव ॥

तयेक्षमाणो जपति — अघोर चक्षुः + चतुष्पद इति ॥

अघोर चक्षु रपतिघ्न्येधि शिवा पतिभ्यः सुमनाः सुवर्चाः । जीवसू

र्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥

तस्याः भ्रुवोर्मध्ये दर्भेण संमार्ष्टि — इदमहं + निर्दिशामीति ॥

इदमहं या त्वयि पतिघ्न्यलक्ष्मिस्तां निर्दिशामि ॥

दर्भमुदङ् निरस्याप उपस्पृश्य ॥

अथैनां दक्षिणे हस्ते गृह्णाति — मित्रोऽसि इति ॥

## ॥ सप्तपदी ॥

वधू होमस्थानमुदानयति, ईशान दिश वा, सप्तपदानि । एकमिषे विष्णुस्त्वान्वेतु । एवमादिभिः

एकमिषे विष्णुस्त्वाऽन्वेतु ॥ द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु ॥ त्रीणि

व्रताय विष्णुस्त्वाऽन्वेतु ॥ चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु ॥

पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु ॥ षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु ॥

सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु ॥

सप्तमस्थानमभिमृश्य जपति — सखायः + मायोष्ठाः इति

सखायः सप्तपदा अभूम सख्यन्ते गमेय सख्यात्ते मां योष

सख्यान्मे मा योष्ठाः ॥

होमस्थानस्य पश्चात् उदक्छिरसमेरका साधीवासामास्तीर्य तस्यां प्राङ्मुखावुपविशतः उत्तरतः पतिर्दक्षिणतः पत्नी ॥

अथ स्थण्डिलादि, अग्निं मथित्वा । श्रोत्रियागाराद्वाहृत्य । पात्रसादनकाले लाजान् अश्मानं च संसाद्य ॥

[आज्यस्थाली स्रुवं चैव प्रणीता प्रोक्षणी तथा । शूर्पं स्रुगिध्मं बर्हिश्च शिलापुत्रिक मेव च ॥ अथ यदि शम्याः परिदधाति शमीमय्यः शम्याकृतयो वाऽरत्निमात्राः]

न चरुनिर्वापणम् ॥ अन्यो वा आपरिधानात्कृत्वा वरस्याऽऽगमनं काङ्क्षेत् ॥ अथान्वारब्धायां परिषेचनादि अग्निमुखान्ते उत्थाय दौच ॥ वरः तस्या दक्षिणमंसं दक्षिणेन हस्तेन गृहीत्वा तस्याः हृदयदेशमभिमृशति । मम + मया भवेति ॥

मम हृदये हृदयं ते अस्तु । मम चित्ते चित्त मस्तु ते । मम वाच मेकमनाः शृणु । मामेवाऽनुव्रता सहचर्या मया भव ॥

अथास्यै दक्षिणे कर्णे जपति — मान्ते मनः + व्रत इति ॥

मा ते मनः प्रविशतु मा चक्षु र्मासु ते भगः । मयि सर्वाणि भूतानि मयि प्रज्ञान मस्तु ते ॥ मधुगे मध्वगाहे जिह्वा मे मधु वादिनी । मुखे गे सारघं मधु दत्सु संवननं कृतम् ॥

चाक्रवाक॰ संवननं यन्नदीभ्य उदाहृतम् ।

यद्विद्वौ देवगन्धर्वौ तेन संवनिनौ स्वः ॥

स्पृशामि तेऽहमङ्गानि वायुरापश्च मा परः ।

मा चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ॥

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।

तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद‍ग्नये । रयिं

च पुत्रा॰ श्चादादग्नि र्मह्यमथो इमाम् ॥

सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा

विश्वस्य भूतस्य प्रगायामस्यग्रतः ॥

अथ दक्षिणेन नीचा हस्तेन दक्षिण मुत्तानं हस्तं साङ्गुष्ठमभी व लोमानि गृह्णाति — गृभ्णामिते + देवा इति ॥

गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः ।

भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदु र्गार्हपत्याय देवाः ॥

हस्तं गृहीत्वैव प्रदक्षिणमग्निं पर्याणयति — परित्वाग्ने+वत इति ॥

परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे

भेत्तारं भङ्गुरावतः ॥

## ॥ प्रदक्षिणविधिः ॥

लाजमाज्यं स्रुवं चैव प्रणीताश्मानमेव च ।
सर्वमभ्यन्तरं कृत्वा ब्रह्मैवैको बहि र्भवेत् ॥

दक्षिणा दिश माश्रित्य यमो मृत्युश्चतिष्ठति ।
दम्पत्यो रक्षणार्थाय ब्रह्मैवैको बहिर्भवेत् ॥

(आद्य प्रदक्षिणं कुर्यात् सहैव ब्रह्मणा सह ।
प्रदक्षिणत्रयं चैव विना ब्रह्माणमाचरेत् ॥)

अथ धर्मोक्तप्रकारः । अभ्यन्तराणि यज्ञाङ्गानि इति न्यायेन ऋत्विगेव ब्रह्मा । तस्मात् दम्पती प्रदक्षिण चतुष्टयं ब्रह्माग्नी अन्तरतः कुर्याताम् ॥

अथ तथोपविश्य करं विसृज्य अन्वारब्धायामुपयमनीराज्यहुतीर्जुहोति स्रुवेण अग्नेशर्धमहत इति एकादशाहुतीः मुञ्चामि पाशमित्यन्तम् ॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । संजास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि स्वाहा ॥ अग्नये शर्धायेदम् ॥ सोमाय जनिविदे स्वाहा ॥ सोमाय जनिविद इदम् ॥ गन्धर्वाय जनिविदे स्वाहा ॥ गन्धर्वाय जनिविद इदम् ॥ अग्नये

जनिविदे स्वाहा ॥ अग्नये जनिविद इदम् ॥ कन्यला पितृभ्यो यती पतिलोक मत्र दीक्षामदास्थ स्वाहा ॥ अग्नय इदम् ॥

प्रेतो मुञ्चाति नामुत. सुबद्धा ममुतस्करत् । यथेय मिन्द्र मीढ्वः सुपुत्रा सुभगा सती स्वाहा ॥ इन्द्राय मीढुष इदम् ॥

इमा त्व मिन्द्र मीढ्वः सुपुत्राꣳ सुभगां कृणु (कुरु)। दशाऽस्यां पुत्रानाधेहि पति मेकादशं कृधि स्वाहा ॥ इन्द्राय मीढुष इदम् ॥

अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजा मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनु मन्यता यथेयꣳ स्त्री पौत्र मघं न रोदा-त्स्वाहा ॥ अग्नीवरुणाभ्यामिदम् ॥

इमामग्नि स्त्रायता गार्हपत्यः प्रजा मस्यै नयतु दीर्घ मायुः । अशून्यो पस्था जीवता मस्तु माता पौत्रमानन्द मभि प्रबुध्यता मियꣳ स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥

मा ते गृहे निशि घोष उत्थादन्यत्र त्व द्रुदत्यः सं विशन्तु । मा त्वं

विकेश्युर आत्र धेष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजा॑
सुमनस्यमाना॑ स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥

अप्रजस्तां पौत्रमृत्युं पाप्मान मुत वाऽघम् । शीर्ष्णः स्रजमिवो-
न्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाश॑ स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥

अथैनामुत्थाप्य उत्तरेणाग्निं दक्षिणेन पदाश्मानमा स्थापयति । अतिष्ठेमं + यत इति ।

आतिष्ठेम मश्मान मश्मेव त्व॑ स्थिरा भव । अभितिष्ठ पृतन्यतः
सहस्व पृतनायत. ॥

अपरेणाग्निं वध्वंजलावुपस्तृणाति । तस्या भ्राता वा भ्रातृस्थानगो वा मेक्षणेन लाजानालोडय द्विर्लाजानावपति त्रिर्जमदग्नीना । अथाभिघार्य पुरस्तादाहुतिं च [तूष्णीं] कृत्वा वधूकरौ हस्ताभ्या गृहीत्वा जुहोति ॥

अंगुल्यग्रैर्न होतव्यं न कृत्वाजलिभेदनम् ।
अंगुलेर्मूलभागेन लाजहोम उदाहृतः ॥

इयं नार्युपब्रूते शतो३मियं + शत॑ स्वाहा । इति ॥

इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पति र्जीवातु
शरदः शतो३मियन्नार्युप + शत॑ स्वाहा ॥ अग्नय इदम् ॥

उपरिष्टादाहुति हुत्वा एवं प्रागन्तमुदगन्तं वाऽऽहुतित्रयं कुर्यात्। अथैना प्रदक्षिणमग्नि पर्याणयति ॥ अत्र करग्रहणं गमन न्यायेन बोधनार्थं तुभ्यमग्रे + सहेति ॥

तुभ्यमग्रे पर्यवहन् त्सूर्यां वहतुना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥

पुनरश्मानमा स्थापयति । अथ लाजहोम । तथा प्रदक्षिणम् । पुनः पत्नीं + शतमिति ॥

पुनः पत्नीमग्नि रदादायुषा सह वर्चसा । दीर्घायुरस्या यः पति स एतु शरदः शतम् ॥

पुनरश्मनि आस्थापनम् । तथा लाजहोमः ॥

अथ स्विष्टकृत उपस्तीर्य उत्तरार्धात्स्विष्टकृतमवदाय द्विरभिघारयति। न प्रत्यनक्ति। (उपविश्य) व्याहृतीर्हुत्वा पुरस्तात्स्रुवाहुति च ॥ (उत्थाय) हव्यवाहं स्विष्टमिति जुहोति [20] पक्वादेव स्विष्टवतीभ्या सौविष्टकृत जुहोति । लाजैरितरत्र। मेक्षणं प्रहृत्य अथैनां पुनरेव प्रदक्षिणमग्नि पर्याणयति । विश्वा उत + द्विष इति ।

विश्वा उत त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषः । अथ तथोपविश्यान्वारब्धायमनूयाजसमिधमिध्मसन्नहनं च जयाद्युपस्थानान्तं समानम् ॥

अनुनयत्येतमग्निम् ॥ अथैनां पितुरङ्कादुद्वहति । गुरोर्वा गृह्णाति । ये वध्वश्चन्द्रं + आगता इति ॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु । पुनस्तान् यज्ञिया

देवा नयन्तु यत आगताः ॥

एना दक्षिणे हस्ते गृहीत्वा स्व वाहनमारोप्य पश्चाद्भाग आगतेऽग्नौ स्वगृह प्रति गच्छेत् — पूषात्वेतो + दासि इति ॥

पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहताँ रथेन ।

गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्व विदथमावदासि ॥

पन्थानमनुमन्त्रयते । सुगं पन्थानं + वस्त्विति ।

सुगं पन्थान मारुक्ष मरिष्टँ स्वस्तिवाहनम् । यस्मिन्वीरो न

रिष्यत्यन्येषां विन्दते वसु ॥

ओषधि वनस्पतयो नद्यो वनान्यनुमन्त्रयते — या ओषधयो यावनस्पतयो + त्वँ हस इति ॥

या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना ।

ते त्वा वधु प्रजावतीं प्रत्वे मुञ्चन्त्वँहसः ॥

वधूं स्वगृहं प्रपादयति । भद्रान् + संविशानीति ॥

भद्रान् गृहान् सुमनसः प्रपद्येऽवीरघ्नी वीरवतः सुवीरान् । इरां

वहतो घृतमुक्षमाणा स्तेष्वह७ सुमनाः संविशानि ॥

वधूमानुडुहे. चर्मण्युपवेशयति — इह गावः + निषीदन्त्विति ॥

इह गावः प्रजायध्व मिहाश्वा इह पूरुषाः । इहो सहस्र दक्षिणो रायस्पोषो निषीदतु ॥

गृहे अग्निं निधाय, इदानीं ज्ञातयः व्रीहितोकुमाणामारोपणैराशी-र्वादं कुर्युः ॥ अथ वाचं यच्छतः आनक्षत्राणामुदयात् । अत्रैव तिष्ठेतां यदि दिवा विवाहं कुर्यात् ॥ रात्रौ चेत् तन्नास्ति ॥ अस्तमित आदित्ये अहो-रात्रयोः सन्धिमनुमन्त्रयते । नीललोहिते + बध्यताम् ॥

नीललोहिते भवतः कृत्या सक्ति र्व्यज्यते । एधन्तेऽस्या ज्ञातयः पति र्बन्धेषु बध्यताम् ॥

उदितेषु नक्षत्रेषु उपनिष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति । ध्रुवोऽसि + अरुन्धतीं इति—

ध्रुवोऽसि ध्रुवक्षिति र्ध्रुवमसि ध्रुवतः स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः ॥ इति ध्रुवम् ॥ सप्तर्षयः प्रथमा कृत्तिकाना मरुन्धतीम् । यद्ध्रुवता७ ह निन्यु. षट्‌ कृत्तिका मुख्ययोगं वहन्तीय मस्माकमेधत्वष्टम्यरुन्धती(५).॥ इत्यरुन्धतीम् ॥

ध्रुवारुन्धत्युपस्थानमारभ्य उपयमन व्रतमेव। अरुन्धत्युपस्थानात् त्रिरात्रमक्षार लवणाशिना वित्युक्तत्वात्। दूरप्रयाणादौ ध्रुवाद्युपस्थानं कृत्वा औपासनमारभ्य कुर्यात्। व्रतारंभकाले उपस्थानादि कार्यम्॥

औपासनात्पूर्वं अग्न्युद्वासने वक्ष्यमाणन्यायेन पुनर्विवाहः कार्यः। उपयमनव्रतारंभात् परं औपासनारंभः॥

रात्रिं कृत्वा त्रिधाऽऽद्यांशे होमारंभं समाचरेत्।
मध्यमे मध्यमांशे स्यात् निषिद्धं स्यात्तृतीयके॥

नारभेत्तुर्ययामे तु तस्मादाद्ये समारभेत्।
तत्काल शोभनार्थं तु दद्याद्धान्य हिरण्यकम्॥

आकालात्काल इष्यत इति उदयपर्यन्तं होमकाल इत्युक्तः तान्नत्य विषयम्॥ दैवाद्विघ्ने सति आकलात्काल इति न्यायः प्राप्यते। प्रथमारंभे तु तुर्ययामो निषिद्ध एव॥

## कूश्माण्डहोमः॥

अथ कूश्माण्डै र्जुहुयात्। कर्मादिष्वेतै र्जुहुयादिति ब्राह्मणात् औपासनारंभार्थं कूश्माण्डै र्होष्यामि। अग्न्यादयः प्रीयन्तामिति पुण्याहम्॥ अग्निमुपसमाधाय संपरिस्तीर्य प्रोक्षणीः संस्कृत्य प्रोक्ष्य आज्यं संस्कृत्य स्रुवं निष्टप्य संमृज्य अग्निं परिषिच्याभ्यर्च्य समिधमाधाय पत्न्यावारब्धोजुहोति।

यद्देवा देवहेळनं यददीव्यन्नृणमहं बभूवायुष्टे विश्वतो दधदित्येतै स्त्रिभिरनुवाकैः प्रत्यृचमेकपञ्चाशदाहुतीर्जुहोति।

यद्देवा देवहेळनं देवासश्चकृमा वयम्। आदित्यास्तस्मान्मा मुञ्चतर्त-

स्यर्तेन मामित स्वाहा। देवेभ्य आदित्येभ्य इदम्॥ देवा जीवन-

काम्या यद्वाचानृतमूदिम । तस्मान्न इह मुञ्चत विश्वे देवाः सजोषसः स्वाहा । विश्वेभ्यो देवेभ्य इदम् ॥ ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति । कृतान्नः पाह्येनसो यत् किञ्चानृतमूदिम स्वाहा । द्यावापृथिवीभ्यां सरस्वत्या इदम् ॥ इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम स्वाहा । इन्द्राग्नि मित्रावरुण सोमधातृ बृहस्पतिभ्य इदम् ॥ सजातशꣳसादुत जामिशꣳसाज्ज्यायसः शꣳसादुत वा कनीयसः । अनाधृष्ट देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि स्वाहा । अग्नये जातवेदस इदम् ॥ यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳ शिश्नैर्यदनृत चकृमा वयम् । अग्निर्मा तस्मादेनसः (गार्हपत्यः) प्रमुञ्चतु चकृम यानि दुष्कृता स्वाहा । अग्नये गार्हपत्यायेदम ॥ येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि स्वाहा । अग्नये ज्योतिष इदम् ॥

यत् कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि। एतत् तदग्ने

अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि स्वाहा। अग्नय इदम्॥

यन्मयि माता इत्यादि त्रयोदश होमाः [28 - 29 - 30 पृष्ठेषु]

यददीव्यन्नृणमहं बभूवादित्सन्वा सञ्जगर जनेभ्यः। अग्निर्मा तस्मादिन्द्रश्च

संविदानौ प्रमुञ्चता॰ स्वाहा। अग्नीन्द्राभ्यामिदम्॥ यद्धस्ताभ्या चकर

किल्बिषाण्यक्षाणा वग्नुमुपजिघ्नमानः। उग्रम्पश्या च राष्ट्रभृच्च

तान्यप्सरसावनुदत्तामृणानि स्वाहा। उग्रपश्या राष्ट्रभृद्भ्यामप्सरोभ्या-

मिदम्॥ उग्रम्पश्ये राष्ट्रभृत् किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत्।

नेन्न ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय स्वाहा। उग्रं

पश्यारा + मिदम्॥ अव ते हेळो वरुण + कृतानि स्वाहा।
वरुणायेदम्॥ [65] उदुत्तमं + स्याम स्वाहा। वरुणायेदम्॥ [64]
इम मे वरुण + मृळय। त्वा + चकेस्वाहा। वरुणायेदम्॥ तत्वा
यामि + अहेळमानो + मोषीः स्वाहा॥ वरुणायेदम्॥ [29].
त्वन्नो अग्ने + हेळो + स्मत्स्वाहा। अग्नीवरुणाभ्यामिदम्॥
सत्वन्नो + मृळीक॰ + एधि स्वाहा। अग्नीवरुणाभ्यामिदम्॥

सङ्कुसुको विकुसुको निर्ऋथो यश्च निस्वनः। ते(१)ऽस्मद्

यक्ष्ममनागसो दूराद्दूरमचीचत॒ᳯ स्वाहा। संकुसुक विकुसुक निर्ऋथ निस्वनेभ्य (अनागोभ्योदेवेभ्य) इदम् ॥ निर्यक्ष्ममचीचते कृत्यान् निर्ऋतिञ्च ॥ तेन योऽ(१)स्मत् समृच्छातै तमस्मै प्रसुवामसि स्वाहा। निर्ऋत्या (अनागोभ्यो देवेभ्य) इदम् ॥ अप उपस्पृश्य ॥ दुःश॒ᳯसानुश॒ᳯसाभ्यां घणेनानुघणेन च। तेनान्योऽ(१)स्मत् समृच्छातै तमस्मै प्रसुवामसि स्वाहा। अनागोभ्यो देवेभ्य (दुःशंसानुशंसघणाऽनु-घणेभ्यः) इदम् ॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा स॒ᳯशिवेन। त्वष्टा नो अत्र विदधातु रायोऽनुमार्ष्टु तन्वो(१) यद्विलिष्ट॒ᳯ स्वाहा। त्वष्ट्र इदम् ॥

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः। पुनस्ते प्राण आयाति परा यक्ष्म॒ᳯसुवामि ते स्वाहा। (वरेण्याय) अग्नय इदम् ॥ आयुर्दा अग्ने हविषा जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिम॒ᳯ स्वाहा। आयुर्देऽग्नय इदम् ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण स॒ᳯशिशाधि। मातेवास्मा

अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् स्वाहा। अग्निवरुणादितिभ्यो विश्वेभ्यो देवेभ्य इदम् ॥ अग्न आयूꣳषि पवस आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनाꣳ स्वाहा। अग्नये पवमानायेदम् ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं। दधद्रयि मयि पोषꣳ स्वाहा। अग्नये पवमानायेदम् ॥ अग्निर् ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयꣳ स्वाहा। अग्नये पवमानायेदम् ॥ अग्ने जातान् प्रणुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ स्वाहा। अग्नये जातवेदस इदम् ॥ सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नः सपत्ना न्त्स्वाहा। अग्नये जातवेदस इदम् ॥ अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति। ताꣳस्त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर स्वाहा। अग्नये वृत्रघ्न इदम् ॥ अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। तं वयꣳ समिधं कृत्वा

तुभ्यमग्नेपि दध्मसि स्वाहा। अग्नय इदम् ॥ यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै निम्रुक्च सर्वं पापँ समूहता ँ स्वाहा। उषो निम्रुग्भ्यामिदम् ॥ यो न सपत्नो यो रणो मर्त्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मातस्योच्छेषि किञ्चन स्वाहा। देवेभ्य इदम् ॥ यो मा द्वेष्टि जातवेदो य चाहं द्वेष्मि यश्च माम्। सर्वाँस्तानग्ने सन्दह याँश्चाहं द्वेष्मि ये च मा ँ स्वाहा। अग्नये जातवेदस इदम् ॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच्च सर्वाँस्तान्मष्मषा कुरु स्वाहा। अग्नय इदम् ॥ सँशितं मे ब्रह्म सँशित वीर्यां(१) बलम्। सँशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः स्वाहा। अग्नय इदम् ॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम्। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वा(२) अहँ स्वाहा। अग्नय इदम् ॥ पुनर्मनः पुनरायुर्म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात् पुनः प्राणः पुनराकूतं म आगात्

पुनश्चित्तं पुनराधीतं म आगात् ॥ वैश्वानरो मेऽदब्धस्तनूपा अवबाधता दुरितानि विश्वा स्वाहा । अग्नये वैश्वानरायेदम् ॥

हुत्वा समित्पाणिर्यजमानलोकेऽवस्थायाग्निमुपतिष्ठते — वैश्वानराय प्रति वेदयाम इत्यनुवाकेन अनृणं कृणोत्वित्यन्तेन ॥

वैश्वानराय प्रतिवेदयामो यदीनृण॑ सङ्गरो देवतासु । स एतान् पाशान्प्रमुचन्प्रवेद स नो मुञ्चातु दुरितादवद्यात् । वैश्वानरः पवयान्नः पवित्रैर्यत् सङ्गरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अव तत् सुवामि । अमी ये सुभगे दिवि विचृतौ नाम तारके । प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् । विजिहीर्ष्व लोकान्कृधि बन्धान् मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व । स प्रजानन्प्रतिगृभ्णीत विद्वान् प्रजापतिः प्रथमजा ऋतस्य । अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसञ्चरेम ॥ ततं तन्तुमन्वेके अनुसञ्चरन्ति येषां दत्तं पित्र्यमायनवत् । अबन्ध्वेके ददतः प्रयच्छाद्दातुञ्चेच्छ- कनवा॑सः स्वर्ग एषाम् । आरमेथामनुस॑रमेथा॑ समानं पन्था-

मवथो घृतेन । यद्दत्तं पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳरभेथाम् । यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषद्दुरिता यानि चकृम । भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या एनः । द्यौर्नः पिता पितृयाच्छम्भवासि जामि मित्वा मा विवित्सि लोकात् । यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा(१)ꣳ स्वायाम् । अश्लोणाङ्गैरहुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम् ॥ यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुतवा करिष्यन् । यद्देवाना चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु । यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम् । यद्देवाना चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु ॥

उपविश्य समिधमादधाति — यन्मे (न्मया)मनसावाचा + यथा तथꣳ स्वाहा इति ॥

(यन्मया) यन्मे मनसा वाचा कृतमेनः कदाचन । सर्वस्मात्

तस्मान् मेळितो मोग्धि त्वँ हि वेत्थँ यथातथँ स्वाहा । अग्नये वैश्वानरायेदम् ॥ अत्र वरं ददाति ॥

## ॥ औपासनारम्भः ॥

अत्र ब्राह्मणाननुज्ञाप्य पूर्वोक्तवत्संकल्प्य औपासनमारप्स्ये । यथा संभव नियमेन अग्निहोत्रहविषामन्यतमेन *द्रव्येण यावज्जीवं यावदाधानं वा तावद्धोष्ये॥ अग्नि सूर्य प्रजापतयः प्रीयन्तामिति पुण्याहं कृत्वा, अद्य सायमौपासन होमं करिष्ये । परिसमूह्य परिस्तीर्याग्नये नमः इत्यष्टाभिरलंकृत्य—अग्नये नमः । जातवेदसे नमः । सहोजसे नमः । अजिराप्रभवे नमः । वैश्वानराय नमः । नर्यापसे नमः । पङ्क्तिराधसे नमः । विसर्पिणे नमः । इति पूर्वाद्यष्टासु दिक्षु । यज्ञपुरुषाय नमः इत्यग्नौ । आत्मने नम. । सर्वेभ्यो ब्राह्मणेभ्यो नमः । इति सर्वान् सदस्यानलं करोति । अन्तः परिस्तरणमुत्तरतोऽग्नेः हविः सादयित्वा अभिद्योत्य प्रोक्ष्य पुनर भिद्योत्य त्रिः पर्यग्नि कृत्वा उदगुद्वास्याग्नि परिषिञ्चति । अदितेऽनुमन्यस्वेति त्रिभिः, देव सवितः प्रसुवेति समन्तं प्रदक्षिणं च परिषिच्य, समिधमग्नावाधाय समिधि आदीप्तायां विद्युदसीत्यप उपस्पृश्य, अग्नयेस्वाहा । प्रजापतये स्वाहेति सायं । सूर्याय स्वाहा । प्रजापतये स्वाहेति प्रातः ॥ द्वितीयाहुतिः स्विष्ट-कृत्स्थानीया ॥ वृष्टिरसीति अप उपस्पृशेत् ॥ (केषा चिन्मते न विद्युद्वृष्टी)

प्रस्थस्य षोडशांशेन ह्याहुति द्वयमाचरेत् ।
चतुरङ्गुलपूर्णं वा हस्तयोश्च समाचरेत् ॥

कनीयस्तस्य पूर्वं हुत्वा । उत्तरं भूयो जुहुयात ॥ यत्पूर्वस्यामाहुत्या हुतायामुत्तराहुतिः स्कन्देत । यत्र वेत्थ वनस्पते देवाना गुह्या नामानि ।

*यवैर्ग्रामकामस्य तण्डुलै रोजस्कामस्य पयसा पशुकामस्य दध्नेन्द्रिय कामस्याऽऽज्येन तेजस्कामस्य ॥ पूर्णाधानस्य कलिनिषिद्धत्वात् यावदाधान-मिति नैव वक्तव्यमिति भाति ॥

तत्र हुत्वाऽग्नि गामयहाति यानम्पत्यग्यर्चा सामधमाधाय तूष्णीमेव पुनः जुहुयात ॥ श्रुतयोराहुत्यो रुपस्थानं, यत्ते अग्ने + भूयासं, मयिमेधा + भ्राजो दधातु [153 पृष्ठे] अग्ने नय + विधेम। अग्नये नमः। मन्त्रहीनं + शिवानुस्मरणं परं। [38 पृष्ठे] नमस्कृत्य भस्म सधार्य स्वयं पत्नी च। उपनयनाग्निस्त मौपासनमिति वचनादुपनयने समिदाधानमन्त्राः औपासनहोम मन्त्राः कर चरणकृतं वा + शंभो [154 पृष्ठे]

अथ विवाहस्याऽऽरुन्धत्युपस्थानात् कृत्वा व्रतमुपैति — उपयमनव्रतं चरिष्यामि। अग्ने व्रतपते उपयमन व्रतं चरिष्यामि। तच्छकेयं तन्मेराध्यताम् एवं वायो व्रतपते, आदित्य व्रतपते, व्रताना व्रतपते, उभौ जायापती व्रत चारिणौ अधः शयाते ॥

उद्वाहे धान्यराशौ च तल्पमास्तीर्य दंपती।
प्राक् शिरस्कौ शयातेऽस्मिन् त्रिरात्रं व्रतचारिणौ ॥
तयोः शय्यामन्तरेणोदुंबरो दण्ड आहितः।
गन्धानुलिप्तो वस्त्रेण परिवीतस्तु तिष्ठति ॥
सकूर्चं प्राक्शिरस्कं च शय्याधस्तं निधाय च।
त्रिरात्रं मंगलार्थाय निशि दीपोऽत्र वर्तते ॥
तत्रैव शयनं कार्यं दपतिभ्या त्रिरात्रत. ॥

## ॥ अथ व्रतनियमः ॥

अरुन्धत्युपस्थानात् त्रिरात्रमक्षारलवणाशिनौ अधश्शायिनौ ब्रह्मचारिणावासाते। अहतवासःपरिधानं सायं प्रातश्चाऽलकरणं इषु प्रतोदयोश्च धारणमग्निपरिचर्या च चतुर्थ्यां पक्वहोम इति ॥

ऋतुमतीमिव स्नातौ वस्त्रान्तर विवर्जितौ।
उद्वाहदीक्षितौ स्याता त्रिरात्रं ब्रह्मचारिणौ ॥

पतिताद्यैस्तु दंपत्योः स्पर्शो यदि भवेत्तदा ।
कुर्यात्सुरभिमत्याद्यैः पवित्रैः प्रोक्षयेद्गुरुः ॥

दम्पत्योः व्रतभङ्गःस्यात् त्वमग्ने यद् द्वयेन च ।
हुत्वा चतुर्गृहीतेन भिन्दादि व्याहृती हुनेत् ॥

अथ होमकाल द्रव्यादि रुच्यते — सायमुपक्रमः । प्रातरपवर्गः ॥ पौर्णमास्यामुपक्रमः । अमावास्यायामपवर्गः ॥ उत्तरायणे उपक्रमः । दक्षिणायने अपवर्गः इति सूत्रं ॥ औपासन पक्षे उपनयनाग्नि त्रिरात्रादूर्ध्वं उत्सृजेत् । दायविभागकालमारभ्य होमपक्षे विवाहाग्नेः आधानानन्तरमुत्सर्गः । दायविभागकालाद्यग्निमुपासीत । पाणिग्रहणमारभ्यैव औपासनविधिः? ॥

## ॥ अथ कालः ॥

प्रातः सूर्योदयात्पश्चात् सायं नक्षत्र दर्शनात् ।
सायंकालः प्रदोषान्ते प्रातस्तु संगवात्पुरा ॥

होमस्यमुख्यकालःस्यात् आहिताग्नेः परस्य च ।
यद्वा त्रिधा कृतस्याह्नः पूर्वः पूर्वोबली भवेत् ॥

आप्रातराहुतिकालात् प्रातराहुतिकालो नातियाति, । आसायमाहुतिकालात् प्रातराहुतिकालः नातियाति, इति सूत्रोक्तं । आपद्विषये दैवात् संकटे एवं कर्तव्यम् ॥

औपासनं स्वयं कर्तुं संकटस्तु भवेद्यदि ।
ऋत्विक् पुत्रो गुरुर्भ्राता जामाता भगिनीसुतः ।
शिष्यस्तैस्तु हुतं यत्स्यात् सुहुतः स्वयमेव हि ॥

## ॥ अथहोमद्रव्याणि ॥

व्रीहिभिर्वा यवैर्वाऽऽज्यैः तण्डुलैः पयसाऽपि वा ।
कुर्याद्धोमं तु दध्ना वा तण्डुलैर्नियमेन वा ॥

व्रीहिभ्यः तण्डुलाः श्रेष्ठाः कुर्यादेकेन च द्वयोः । [कालयोरित्यर्थं ]
दुर्ब्राह्मणत्व नाशाय कुर्यादौपासनं सदा ॥

आपक्व होमान्निशायां हुने, पक्वहोम इति सूत्रम् । निशायाः पश्चिमे भागे पूर्वभागेऽथवा हुनेत् । जायापती दिवेऽपोष्य कुरुना शेषहोमकम् ॥ इति । अन्यसूत्रिणां पश्चिमे भागे होमः । बोधायनीयानां पक्वहोम व्रतोत्सर्जनानन्तरमुपसंवेशनमुच्यते । अत एव पूर्वरात्रे पक्वहोमः । पाणिग्रहणमारभ्य आसमाप्तेः वधूगृहात् चरुमाज्यं च गन्धाद्य तत्कालयोग्यमानयेत् ॥

अथ सायं होमानंतरं पक्व होमं करिष्ये । अग्निः पुत्रवान् प्रीयतामिति पुण्याहम् । मुखान्तं कृत्वा पक्वाज्जुहोति । यस्त्वा हृदेति पुरोनुवाक्यामनूच्य यस्मै त्वमिति याज्यया जुहोति ।

यस्त्वा हृदा कीरिणा मन्यमानो ऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्योऽम् यस्मै त्व सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विन स पुत्रिणं वीरवन्तं गोमन्त रयिं नशते स्वस्ति स्वाहा ॥ अग्नये पुत्रवत इदम् ॥

स्विष्टकृतमवदाय अन्तःपरिधि सादयित्वा । अथाज्याहुतीरुप जुहोति—
अग्ने प्रायश्चित्ते + कृणोमि स्वाहा, इति चतुर्भिः ।

अग्ने प्रायश्चित्ते त्वं देवाना प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नी मस्यैतां

कृणोमि स्वाहा ॥ अग्नय इदम् ॥ एवं वायो प्रायश्चित्ते, आदित्य प्रायश्चित्ते, प्रजापते प्रायश्चित्ते + स्वाहा ॥ प्रजापतय इदम् ॥

स्विष्टकृदादि संस्रावान्तं कृत्वा वध्वाः मूर्ध्नि हिरण्यं निधाय आज्यशेषेण हिरण्योपरि जुहोति व्याहृतीभिः ॥

अथ वधूमग्निं प्रदक्षिणं पर्याणयति। अर्यम्णो अग्नि + देवराश्चेति।

अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताᳯ श्वश्रुवो देवराश्च ॥

ततो व्रतमुत्सृजति। उपयमन व्रतोत्सर्जनं करिष्यामि। अग्ने व्रतपते उपयमनं व्रतमचारिषम्। तदशकं तन्मे राधि। एवं वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते + राधि ॥ गन्धर्वं कूर्चदण्डमुत्थापयति — ऊर्जः पृथिव्या अध्युत्थितोऽसीति ॥

ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह।

त्वया वयमिषमूर्जं म(व)दन्तो रायस्पोषेण समिषा मदेम ॥

दण्डं वध्वै प्रयच्छति—प्रजया त्वा सᳯसृजामि मासरेण सुरामिव इति॥

दण्डं वधूः प्रतिगृह्णाति — प्रजावती भूयासं इति।

अथ दण्डं वराय प्रयच्छति — प्रजया त्वा पशुभिः सᳯ

सृजामि मासरेण सुरामिव इति।

दण्डं वरः प्रतिगृह्णाति + प्रजावान् पशुमान् भूयासमिति ॥ दण्डं स्थूणादेशे निधाय । परिषेचनादि कृत्वा समाप्य द्विजैराशीर्वादं कारयित्वा भोजनानन्तरं दम्पती शयाते ॥

अथ श्रीमन्तमगारं संमृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं चतुर्दिक्षु सर्पिः सूत्रेन्धन प्रद्योतितमुदकुंभमादर्शं च उच्छिरसं प्रपाद्य तस्मिन्नेनां संवेश्य तस्याः समीपे उपविश्य जपति — उदीर्ष्वातो + जनुषा तस्य विद्धीति ॥

उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा । अन्यामिच्छ प्रफर्व्यꣳ सञ्जाया पत्या सृज ॥ उदीर्ष्वातः पतिवती ह्येषा विश्वावसु नमसा गीर्भिरीट्टे । अन्यामिच्छ पितृषदं व्यक्ताꣳ स ते भागो जनुषा तस्य विद्धि ॥

अथैनामुपैति — प्रजापतिस्त्रिया यशः + इह मा इत्यृचा [235] ॥ अथास्यास्तोकोर्तिं योनिं विवृणोति — प्रजायै त्वा इति ॥ सा यद्यश्रु कुर्यात, तामनुमन्त्रयते — जीवाꣳरुदन्ति + परिष्वजे इति ॥

जीवाꣳ रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीध्युर्नरः । वामं पितृभ्यो य इदꣳ समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥

अथाभ्या पञ्चमेऽहनि नापितकर्म कुर्वीत । नापिताय पयोदनं दत्वा वध्वाः केशवर्जं कृत्वा स्नात्वाऽलंकृत्य*

* नापितकर्म शिष्टाचारे न विद्यते ॥

## ॥ औदुंबरपूजा ॥

ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य एकमूलमुदुंबरं यत्र तत्र गत्वा तं प्रदक्षिणं परिसमूह्य । उदुंबरमावाहयामि । आसनादि दत्वा प्रदक्षिणं गन्धैरनुलिपन् जपति — यथा त्व वनस्पते + रुहेमेति ॥

यथा त्वं वनस्पत ऊर्जा ऽभ्युत्थितः (तो वनस्पते) शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा विवय७ रुहेम ॥

पुष्पमालां परिवेष्टयति — यथा त्वं + भवानीति—यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवान् भवानि ॥

अत्रैव त्रिवृतान्नेन बलिमुपहरति —अशनं पानं खाद्यमिति त्रिवृदन्नम् ऊर्जस्वान् + वृत्स्वेति ॥

ऊर्जस्वान् पयस्वान् पयसा पिन्वमानोऽस्मान्वनस्पते पयसाऽभ्याववृत्स्व ॥

अथ उदुंबर दण्डमादाय पुण्याहं वाचयित्वा उदुंबरः प्रीयतामिति । दण्डमप्सु विसर्जयति ॥

## ॥ मत्स्यग्रहणम् ॥

अथ जायापती जानुदघ्नजले स्थित्वा प्राचीनदशेनाऽहतेन वाससा मत्स्यान् गृह्णन्तौ ब्रह्मचारिणं पृच्छतः ब्रह्मचारिन् किं पश्यसि इति । स पृष्टः प्रतिब्रूयाद् ब्रह्मचारी — पुत्रांश्च पशूंश्च इति । एतान् मत्स्यानुदुंबरमूले बकानां

बलिमुपहरति — दीर्घायुत्वाय वर्चसे इति ॥ इदमत्र निर्माल्य परिभुक्तवस्त्र प्रतिसरांश्च प्रतिमुच्य उदुम्बरशाखायां विसृज्यात्र स्नानार्थमभ्यंगमन्योन्यं कृत्वा जलं प्राप्य स्नात्वा परस्परं पृष्ठे विशोध्य स्नात्वोत्तीर्य जलं पृष्ठीकृत्य उदकसमाप्ति-स्थलं प्रतियाति—प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश. इति ॥

अन्योन्यमलंकृत्य रक्तानि वासांसि अहतानि वा परिधाय यानेन पद्भ्यां वा गृहं गत्वा सुप्रक्षालित पाणिपादावप आचम्य वाग्यतावासाते ॥

## ॥ आग्नेयस्थालीपाकः ॥

आग्नेय स्थालीपाकेन यक्ष्ये, इति संकल्प्य अग्निः प्रीयतामिति पुण्याहम् । औपासनाग्नौ अग्निमुखान्ते अग्निर्मूर्धा भुव इति [126पृष्ठे] द्वाभ्या पक्वहोमः ॥ उपहोमान्व्याहृतीभि र्जुहुयात् । स्विष्टकृदादि समापयेत् ॥

अथास्तमित आदित्ये वाग्यतौ शयनंगतौ अन्योन्यमलंकृत्य उपरिशय्यां शयाते । अथ वधूमभिमन्त्रयते — सुमङ्गलीरियं + तनेति ।

सुमङ्गलीरियं वधूरिमा॑ँ समेत पश्यत । सौभाग्य मस्यै दत्वाया-
थास्तं वि परेतन ॥

अथ वधूं सार्वसुरभि गन्धमाल्यादिभिरलंकरोति ॥

सन्नौ मनः सं हृदयानि सन्ना(ऽ)भिः सं तनुत्वचः (त्यज.) । सं त्वा
कामस्य योक्त्रेण युञ्जन्त्य (ञ्जाम्य) विमोचनाय ॥ .

श्वोभूते वैश्वदेवेन प्रतिपद्यते । मासि श्राद्धेनापरपक्षे—

उद्वाह पञ्चमाहे तु स्नानमभ्यज्य दम्पती । ताम्बूलभक्षणं चात्र कुर्यातां द्विजचोदितम् ॥ श्वश्रूश्वशुर वाक्याभ्यां वध्वै नाम यदाचरेत् । भर्त्रा नामाह्वय देवस्य नायकी नामवाचनम् ॥ इति न्यायेन श्वश्र्वादिभि कृतं भर्तृगृहोक्तनामधेयं पञ्चमेऽहनि कृत्वा युः ॥

मत्स्य ग्रहणानन्तर दिवसे वैश्वदेव होमारंभः । तदनंतर कृष्णपक्षे वैवाहिकाख्यमासिश्राद्धं कुर्यात् ॥ यद्वा दशमेऽहनि वैश्वदेवारम्भः । तदानीमेव वैवाहिक श्राद्धमापरपक्षिकं कुर्यात् ॥

## ॥ वैश्वदेवस्थालीपाकः ॥

विश्वेदेवाः प्रीयन्तामिति पुण्याहम् ॥ औपासने अग्निमुखान्ते पक्वाज्जुहोति । विश्वेदेवा ऋता वृध', विश्वेदेवाः शृणुतेममिति द्वाभ्याम् ॥

विश्वेदेवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयोऽम्

विश्वेदेवाः शृणुतेम हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्याऽस्मिन् बर्हिषि मादयध्वम् । स्वाहा ॥ विश्वेभ्यो देवेभ्य इदम् ॥

स्विष्टकृतमवदाय निधाय चरौ हस्तेन सकृदवदाय निधाय अवघ्राह्यं जुहोति ॥ यद्वा वधूगृहागतान्नेन जुहोति ॥

वैश्वदेवाख्यहोमार्थं आगतं वा वधूगृहात् ।
शुद्धान्नं पायसं वाऽपि तेनैव जुहुयात्तु वा ॥

## ॥ शकलहोमः ॥

एनो निर्हरणार्थं शकल होमं करिष्ये । अग्निं समन्तं तूष्णीं परिषिच्य शकलानि प्रोक्ष्य जुहोति देवकृतस्यैनसोऽव यजनमसि स्वाहेत्यष्टौ पाहि नो अग्न इति पञ्च [34पृष्ठे] व्याहृतीभि श्चतस्रः एताः सप्तदश ॥

देव कृतस्यैनसोऽवयजनमसि स्वाहा । अग्नय इदम् ॥ मनुष्यकृतस्यै-नसोऽव+स्वाहा । अग्नय इदम् ॥ पितृकृतस्यैन+स्वाहा । अग्नय इदम् ॥ आत्मकृतस्यैन+स्वाहा । अग्नय इदम् ॥ यद्दिवा च नक्तं चैन श्चकृम तस्याव+स्वाहा । अग्नय इदम् ॥ यत्स्वपन्तश्च जाग्रतश्चैन+ स्वाहा । अग्नय इदम् ॥ यद्विद्वाꣳ सश्चाऽविद्वाꣳसश्चैन+स्वाहा । अग्नय इदम् ॥ एनस एनसोऽवयजनमसि स्वाहा । अग्नय इदम् ॥ समन्तं तूष्णीं परिषिच्य ॥

अथ वैश्वदेवहोमं करिष्ये अग्निं परिषिच्याऽभ्यर्च्य हविः प्रोक्ष्य समिध माधाय हस्तेन जुहोति । अग्नये स्वाहेति विंशतिः । व्याहृतीभिश्चतस्रः ॥ अग्नये स्वाहा । अग्नय इदम् ॥ सोमाय स्वाहा । सोमायेदम् ॥ ध्रुवाय स्वाहा । ध्रुवायेदम् ॥ ध्रुवाय भूमाय स्वाहा । ध्रुवाय भूमायेदम् ॥ ध्रुवक्षितये स्वाहा । ध्रुवक्षितय इदम् ॥ अच्युतक्षितये स्वाहा । अच्युतक्षितय इदम् ॥ ईशानाय स्वाहा । ईशानायेदम् ॥ जयन्ताय स्वाहा । जयन्तायेदम् ॥ धर्मरुचये स्वाहा । धर्मरुचय इदम् ॥ धन्वन्तरये स्वाहा । धन्वन्तरय इदम् ॥ विद्यायै स्वाहा ।

विद्याया इदम् ॥ अम्बिकायै स्वाहा । अम्बिकाया इदम् ॥ हरये स्वाहा । हरय इदम् ॥ गणेभ्यः स्वाहा । गणेभ्य इदम् ॥ गणपतिभ्यः स्वाहा । गणपतिभ्य इदम् ॥ परिषद्भ्यः स्वाहा । परिषद्भ्यं इदम् । विश्वेभ्यो देवेभ्यः स्वाहा । विश्वेभ्यो देवेभ्य इदम् ॥ साध्येभ्यो देवेभ्यः स्वाहा । साध्येभ्यो देवेभ्य इदम् ॥ सर्वेभ्यो देवेभ्यः स्वाहा । सर्वेभ्यो देवेभ्य इदम् ॥ सर्वाभ्यो देवताभ्यः स्वाहा । सर्वाभ्यो देवताभ्य इदम् ॥ भूः स्वाहा + प्रजापतय इदम् ॥

अग्नये स्विष्टकृते स्वाहा इति उत्तरार्धपूर्वार्धे जुहोति । अग्नये स्विंष्टकृत इदम् ॥ परिषिच्य ॥ उदीचीनमुष्णं भस्मापोह्य तस्मिन् तूष्णीं जुहोति — स्वाहा । प्रजापतय इदम् (क्षारलवणमिश्रान्नहोमः ॥)

## ॥ अथ बलिहरणम् ॥

सर्वेष्वायतनेषु पाणिना परिसमूह्योभयतः परिषेकं निदध्यात् ॥ देशाभ्यासे मन्त्राभ्यासः कामं समानस्थानेषु ॥ अन्तरेणाऽग्निं प्रागपवर्गे — धर्माय स्वाहा । धर्मायेदम् ॥ अधर्माय स्वाहा । अधर्मायेदम् ॥ अग्रेणाऽग्नि — कद्रुवै नागमात्रे स्वाहा । कद्रुवै नागमात्र इदम् ॥ सर्पेभ्य स्वाहा । सर्पेभ्य इदम ॥ सर्वत्र आद्यन्तयोः परिषिञ्चेत् ॥

अथ बल्यादिस्थानेषु बलिं कर्तुमशक्तः अग्नेरुत्तरतः अष्टासु पङ्क्तिषु बलिमन्नं हरेत् ॥ अचलादि नव प्रोक्तमोषध्यादिमिरष्टकम् । धनधान्यादि सप्त स्युः गृह्याभ्यादि नवाऽऽहुतीः । भूत्यै दश तथा वास्तोः चराद्यष्टौ वसु मुनिः ॥ मुनिः सप्तेत्यर्थः ॥

अग्निण्यावकाशे — अचलायै देव्यै स्वाहा । अचलायै देव्या इदम् ॥ वास्तुपाल्यै सगणायै स्वाहा ॥ वास्तुपाल्यै सगणाया इदम् ॥ अग्निणदेशे —

अद्भ्यः स्वाहा । अद्भ्य इदम् ॥ वरुणाय स्वाहा । वरुणा येदम् ॥ स्थाल्यां—प्रजापतये स्वाहा । प्रजापतय इदम् ॥ परमेष्ठिने स्वाहा । परमेष्ठिन इदम् ॥ देवताऽवकाशे—ऋषभाय स्वाहा । ऋषभायेदम् ॥ रुद्राय स्वाहा । रुद्रायेदम् ॥ रुद्राण्यै स्वाहा । रुद्राण्या इदम् ॥ अप उपस्पृश्य ॥ मध्येऽगारस्य—ओषधि वनस्पतिभ्यः स्वाहा । ओषधि वनस्पतिभ्य इदम् ॥ रक्षोदेवजनेभ्यः स्वाहा । रक्षोदेव जनेभ्य इदम् ॥ उच्छिरसि—कामाय स्वाहा । कामायेदम् ॥ भगाय स्वाहा । भगायेदम् ॥ श्रियै स्वाहा । श्रिया इदम् ॥ विष्णवे स्वाहा । विष्णव इदम् ॥ स्थूणादेशे — गृहाय स्वाहा । गृहायेदम् ॥ गृहराजाय स्वाहा । गृहराजायेदम् ॥ धनधान्याऽवकाशे — धनधान्याभ्या॑ स्वाहा । धनधान्याभ्यामिदम् ॥ वैश्रवणाय स्वाहा । वैश्रवणायेदम् ॥ गोष्ठे पल्वले वा—श्रियै स्वाहा । श्रिया इदम् ॥ पुष्ट्यै स्वाहा । पुष्ट्या इदम् ॥ उद्धखल मुसलावकाशे — उद्धखलमुसलाभ्या॑ स्वाहा । उद्धखलमुसलाभ्यामिदम् ॥ दृषदुपलावकाशे—दृषदुपलाभ्या॑ स्वाहा । दृषदुपलाभ्यामिदम् ॥ समूहन्यवकाशे — समूहन्यै देव्यै स्वाहा । समूहन्यै देव्या इदम् ॥ उत्तरपूर्वदेशेऽगारस्य — गृह्याभ्यः स्वाहा गृह्याभ्य इदम् ॥ अवसानेभ्यः स्वाहा । अवसानेभ्य इदम् ॥ अवसानपतिभ्यः स्वाहा । अवसानपतिभ्य इदम् ॥ सर्पदेवजनेभ्यः स्वाहा । सर्पदेवजनेभ्य इदम् ॥ सर्वभूतेभ्यः स्वाहा । सर्वभूतेभ्य इदम् ॥ द्वारमध्ये — अन्तरिक्षाय स्वाहा । अन्तरिक्षायेदम् ॥ अवान्तरिक्षाय स्वाहा । अवान्तरिक्षायेदम् ॥ पार्श्वयोः — धात्रे स्वाहा । धात्र इदम् ॥ विधात्रे स्वाहा । विधात्र इदम् ॥ उपपार्श्वयोः — भूत्यै स्वाहा । भूत्या इदम् ॥ प्रभूत्यै स्वाहा । प्रभूत्या इदम् ॥ संवरणदेशे — यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा । वायव इदम् ॥ (नाम्न इदम् ॥)—अथोपनिष्क्रम्य ज्येष्ठावकाशे — ज्येष्ठाभ्या॑ स्वाहा । ज्येष्ठाभ्यामिदम् ॥

करस्करात्रक्राशे — करस्कराभ्या ँ स्वाहा। करस्कराभ्यामिदम् ॥ अनसि वा रथे वा — श्रियै स्वाहा। श्रिया इदम् ॥ विष्णवे स्वाहा। विष्णव इदम् ॥ गोष्ठे — रुद्राय स्वाहा। रुद्रायेदम् ॥ पशुभ्यः स्वाहा। पशुभ्य इदम् ॥ पशुपतये स्वाहा। पशुपतय इदम् ॥ वास्तुमध्ये — वास्तोष्पतये स्वाहा। वास्तोष्पतय इदम् ॥ पृथिव्यै स्वाहा। पृथिव्या इदम् ॥ अन्तरिक्षाय स्वाहा। अन्तरिक्षायेदम् ॥ दिवे स्वाहा। दिव इदम् ॥ सूर्याय स्वाहा। सूर्यायेदम् ॥ चन्द्रमसे स्वाहा। चन्द्रमस इदम् ॥ नक्षत्रेभ्यः स्वाहा। नक्षत्रेभ्य इदम् ॥ अद्भ्यः स्वाहा। अद्भ्य इदम् ॥ ओषधीभ्यः स्वाहा। ओषधिभ्य इदम् ॥ वनस्पतिभ्यः स्वाहा। वनस्पतिभ्य इदम् ॥ चराचरेभ्यः स्वाहा। चराचरेभ्य इदम् ॥ परिप्लवेभ्यः स्वाहा। परिप्लवेभ्य इदम् ॥ सरीसृपेभ्यः स्वाहा। सरीसृपेभ्य इदम् ॥ देशेभ्यः स्वाहा। देशेभ्य इदम् ॥ कालेभ्यः स्वाहा। कालेभ्य इदम् ॥ लोकेभ्यः स्वाहा। लोकेभ्य इदम् ॥ देवेभ्य. स्वाहा। देवेभ्य इदम् ॥ ऋषिभ्यः स्वाहा। ऋषिभ्य इदम् ॥ वसुभ्य स्वाहा। वसुभ्य इदम् ॥ रुद्रेभ्य. स्वाहा। रुद्रेभ्य इदम् ॥ अपः स्पृष्ट्वा ॥ आदित्येभ्यः स्वाहा। आदित्येभ्य इदम् ॥ इन्द्राय स्वाहा। इन्द्रायेदम् ॥ बृहस्पतये स्वाहा। बृहस्पतय इदम् ॥ प्रजापतये स्वाहा। प्रजापतय इदम् ॥ ब्रह्मणे स्वाहा। ब्रह्मण इदम् ॥ अथ दक्षिणतः प्राचीनावीती — पितृभ्यः स्वधानमः स्वाहा। पितृभ्य इदम् ॥ पितामहेभ्यः स्वधानमः स्वाहा। पितामहेभ्य इदम् ॥ प्रपितामहेभ्यः स्वधानमः स्वाहा। प्रपितामहेभ्य इदम् ॥ अप+श्य ॥ उत्तरतो यज्ञोपवीती — नमो रुद्राय भगवते स्वाहा। रुद्राय भगवत इदम् ॥ अप+श्य अथ दिक्षु — प्राच्यै दिशे स्वाहा। प्राच्यैदिश इदम् ॥ दक्षिणायै दिशे स्वाहा। दक्षिणायै दिश इदम् ॥ प्रतीच्यै दिशे स्वाहा। प्रतीच्यै दिश इदम् ॥ उदीच्यै दिशे स्वाहा। उदीच्यै दिश इदम ॥ ऊर्ध्वायै दिशे स्वाहा। ऊर्ध्वायै दिश इदम ॥ अधरायै दिशे स्वाहा। अधरायै दिश इदम ॥ अवान्तरदिक्षु— यमाय स्वाहा। यमायेदम् ॥ निर्ऋत्यै स्वाहा। निर्ऋत्या इदम् ॥ अप+श्य ॥

रक्षोभ्यः स्वाहा । रक्षोभ्य इदम् ॥ अप + श्य ॥ ईशानाय स्वाहा । ईशानायेदम् ॥ अथाकाश उत्क्षिपति ये भूताः प्रचरन्ति दिवा नक्तमित्यूह्य कुर्यात् ॥ ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपति र्दधातु स्वाहा । इति दिवा ॥ पुष्टिपतय इदम ॥ (भूतेभ्य इदम्) ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो + स्वाहा । इति रात्रौ ॥

बलिपात्रं संक्षाळनं प्रागुदीच्यां दिशि निनयति — नमो रुद्राय भौमाय स्वाहा । रुद्राय भौमायेदम् ॥ अप + श्य ॥

## ॥ अथ धर्मोक्त पञ्चमहायज्ञान् कुर्यात् ॥

देवयज्ञेन यक्ष्ये—विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि इत्यपः स्पृष्ट्वा । अदितेऽनु मन्यस्वेति परिषिच्याऽग्नौ जुहोति — देवेभ्यः स्वाहा । देवेभ्य इदम् ॥ वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् । इत्यपः स्पृष्ट्वा परिषिच्य समिधमाधाय ॥

प्राचीनावीती — पितृयज्ञेन यक्ष्ये, विद्युदसि + पैमि, अपःस्पृष्ट्वा । पितृभ्यः स्वधा नमः स्वाहा इति दक्षिणतः । पितृभ्य इदम ॥ [केषांचिन्मते — पितामहेभ्यः स्वधा नमः स्वाहा । प्रपितामहेभ्यः स्वधा नमः स्वाहा ॥ इति च ॥] अप + श्य यज्ञोपवीत्यप उपस्पृश्य ॥

भूतयज्ञेन यक्ष्ये, विद्युदसि + पैमि । भूतेभ्यो नमः इत्यन्नेनाग्नेरुत्तरतः । भूतेभ्य इदम् ॥ वृष्टिरसि + गाम् ॥

मनुष्ययज्ञेन यक्ष्ये, विद्युदसि +मि ॥ मनुष्येभ्यो हन्ता । मनुष्येभ्य इदम् ॥ वृष्टिरसि + गाम् ॥

श्व वायसबलिं करिष्ये — उपनिष्क्रम्य — श्वानौ हि(द्वौ) श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यामन्नं प्रदास्यामि स्याता मे(म्मे)तां वहिसकौ ॥ श्वभ्यामिदम् ॥ ऐन्द्र वारुण वायव्याः सौम्या याम्याश्च नैर्ऋताः । वायसाः प्रतिगृह्णन्तु भूमावन्नं मयाऽर्पितम् ॥ वायसेभ्य इदम् ॥

देवा मनुष्याः पशवो वयांसि सिद्धाश्च (गन्धर्व) यक्षोरगदैत्यसंघाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ देवादिभ्य इदम् ॥ चित्रबलि करिष्ये — चित्राय स्वाहा । चित्रायेदम् ॥ चित्रगुप्ताय स्वाहा । चित्रगुप्तायेदम् ॥ यमाय स्वाहा । यमायेदम् ॥ धर्मराजाय स्वाहा । धर्मराजायेदम् ॥ सर्वभूतेभ्यः स्वाहा । सर्वभूतेभ्य इदम् ॥

यत्र क्वचन संस्थाना क्षत्तृष्णोपहतात्मनाम् । भूताना तृप्तये तोयमिदमस्तु यथासुखम् इति संक्षाळन निनयेत् ॥ वैश्वदेवं हुत्वा अतिथिमाकांक्षेत् आगोदोहकालम् ॥ अग्रं वोद्धृत्य दद्यात् ॥

अथ जघनेन गार्हपत्यं उपविश्य औपासनस्य वा दर्भेष्वासीनो दर्भान्धारयमाणस्त्रीन् प्राणायामान् धारयमाणः सावित्री सहस्रकृत्वः शतकृत्व॰ दशकृत्वो वा जपित्वा । ब्रह्मयज्ञेन यक्ष्ये — विद्युदसि + पैमि । हस्तावव- निज्य त्रिराचामेत् । द्वि॰ परिमृज्य सकृदुपस्पृश्य सव्यं पाणि पादौ प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रौ ओमिति प्रतिपद्यते — ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते, इति त्रिरुक्त्वा सावित्री पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीन् चतुरश्च । अग्निर्मूर्धा

दिवः ककुदिति संहितानुवाकं [मं, का 4-प्र4 अनु4] यद्देवा देवहेडनमित्यच्छि-द्रानुवाकं नमो ब्रह्मण इति त्रिरावृत्य प्रणवेन समाप्य वृष्टिरसि + गाम् ॥

अथाज्याहुतीः– इष्टेभ्य इति नवाहुतीः [32पृष्ठे] 9-सर्व समृद्ध्यै स्वाहा । सर्वसमृद्ध्या इदम् ॥ इति यज्ञसमृद्धीर्जुहोति *

स्विष्टकृदादि उपस्थानान्तम् ॥

## ॥ पञ्चमहायज्ञ न्यायादिरुच्यते ॥

पञ्च महायज्ञाः सायं प्रातश्च कर्तव्याः । अशनीयान्नेन कुर्यात् । औपासने पचने वा होमः । क्षारलवण वर्जम् । वरान्नं संसृष्टं चेत् कोद्रवादि चेत् उत्तरतो भस्मभिश्रानंगारान् निरूह्य तेषु जुहुयात् ॥ सर्वेष्वायतनेषु पाणिना परिसमूह्य उभयतः परिषेकः। अथ उपरि च निदध्यात् । सर्वाण्यायतनानि गन्धपुष्प धूपदीपैः पल्य(प्रत्य)लंकरोति । अथ बर्हिः प्रोक्षति पर्यग्निकृत्वाऽग्निं परिषिच्यालंकृत्य समिधमाधाय हस्तेन जुहोति। पञ्चविंशत्याहुति शेषं पूर्वं मुक्तम्। आचार्योक्तप्रकारेण तत्तत्स्थाने बलीन् हरेत् । अशक्तो मनसा ध्यात्वा वह्नेरुत्तरतः क्रमात् । पंक्तिष्वष्टासु कुर्वीत यद्वा वल्मीकरूपतः ॥ दहनं पवनं चेदं लवन पेषणन्त्विति । पञ्चसूनाः प्रायश्चित इत्येते शास्त्रवित्तमाः ॥ आचार्यस्तु देवाना देवयज्ञेन द्विजा गच्छन्ति साम्यताम् । पितॄणां पितृयज्ञेन भूतयज्ञेन भूतिनः ॥ मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः । एतासा साम्यता गत्वा देवताना शतं समाः ॥

[एवमेते पञ्च महायज्ञा वैश्वदेव बलिहरणान्ते पृथगेव कर्तव्या इति अन्यः पक्षः ॥]

* श्रौतसूत्रे दर्शपूर्णमास प्रायश्चित्तेषु सर्वसमृद्ध्यै स्वाहेति विद्यते । तदनुसृत्यैव नवेत्युक्तं कनकसभापतिना ॥

आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम् । पञ्चयज्ञाः द्विविधा प्रोक्ताः । आदौ प्रश्न ब्रह्मयज्ञादि ब्रह्मयज्ञः । वैश्वदेवहोमादि देवयज्ञः । पितृयज्ञो, भूतयज्ञः, अतिथिपूजा मनुष्ययज्ञ इति पञ्चमहायज्ञाः ॥ किंच वेदोक्त प्रकारेण गृह्यसूत्रे पञ्चयज्ञा उक्ताः । अपि पुनश्च धर्मपरिभाषाया च आत्मनिष्क्रयणं च यदग्नौ जुहोत्यपि समिधमिति पुनरुक्तत्वात् शिष्टि गृह्यभाष्योक्तत्वात् गृह्ये पश्चादपि ब्रह्मयज्ञः । अग्निर्मूर्धाइत्युक्तत्वाच्च पुनरपि । देवयज्ञादि चतुष्टयं धर्म-प्रकारेण कर्तव्यम । किच तच्छेषेतु कथंखलु नित्यानामनुक्रम इति सन्ध्यौपासनाग्न्युपस्थानं नित्यस्वाध्याय गृहकर्मस्नानादित्योपस्थान तर्पणगृहयज्ञदेवतार्चन वैश्वदेवहोम पञ्चमहायज्ञात्मयज्ञ सन्ध्यौपासना ग्नहोत्रात्मयज्ञसंवेशनानि इत्येतानि इत्युक्तत्वात् गृह्योक्तवैश्वदेवहोमः । अथ वैश्वदेवं हुत्वाऽतिथि माकाक्षेदिति वचनात्पुनरपि पञ्चमहायज्ञकरणमुक्तम् । तस्मात्पूर्वोक्त प्रकारेण कर्तव्यम् । मनुष्ययज्ञस्तु स्मृत्युक्त प्रकारेण, मनुष्येभ्यो हन्ता इति कर्तव्यम । पश्चादुक्त स्वाध्यायेन पञ्चमहायज्ञा द्विविधा भवन्ति । द्विविधंकर्तव्यमेव ॥

अतिथिरुच्यते श्रान्तः अदृष्टपूर्वः अश्रुतः केवलमन्नार्थी नान्यत्प्रयोजनो य एति सोऽतिथिः ॥

श्वश्रूश्वशुरयोनिसंबन्धाः स्नेहबन्धमभिभाषमाणा भूयोभूयोऽभ्यागच्छेरन् तथा प्रेषणिकाश्च अभ्यागता भवन्ति ॥

सखा सहाध्यायी अध्वनि सहैव आगतश्च अनर्घ्वो रथी चातिथिः ॥

तेषामन्तराले विपङ्क्तीः कृत्वा सर्वान् कामानुपहरेत् ॥

ब्रह्मचारी आगतश्चेत् कुशलमभिभाष्य कपालमस्मै दद्यात् भिक्षार्थम् ॥ भिक्षा दद्यात् स तस्योपचारः ॥

अथ यतिमागतमभ्युत्थाय स्वागतमित्युक्त्वाऽभिवाद्य आसनं पादशौचं च नियुञ्ज्यात् ॥

अतिथिमभ्यागतमुत्थाय कुशलमभिभाष्य आसनं पाद्यमर्घ्यमाचमनीयं च दत्वा याः तत्र भोज्यक्रियाः सन्ति देयाः ।

यद्वा आत्मभोज्यद्रव्यार्धं दत्वा उपचर्यात् । अभावे आसनं दत्वा पाद्यं च कल्पयाणां वाग्भवति । एवं सर्वेभ्य अभ्यागतेभ्य आचण्डालेभ्यश्च पूजयेत् ।

अत्र निषेधः—

पाषण्डिनो विकर्मस्थान् बैडाल व्रतिकान् शठान् ।
हैतुकान बकवृत्तींश्च वाङ्मात्रेणाऽपि नाऽर्चयेत् ॥

अथ यद्यतिथिरभ्यागगतो वा यस्य गृहे नाश्नीयात् तस्मै देवताः सर्वा अवरुद्धा भवन्ति । तस्माद्विधिना अतिथीन् पूजयेत् । नैनं मृत्युरभि भवति । नार्तिर्न जरा न शोकः भवति । अतिथिः स्वर्गमवाप्नुयात् ॥ प्रवासे कुरुते चैनान् यदन्नमुपपद्यते । तेनैव पञ्च यज्ञांश्च कुर्यादेव यथाविधि ॥ न चेदुत्पद्यते चान्नमद्भिरेनान् समापयेत् । तदशक्तौ जपेन्मन्त्रान् सर्वानेव यथाक्रममम् ॥

केवलाघो भवति केवलादी—

पञ्चयज्ञ विहिनाना त्यक्ताग्नीना च कामत. ।
व्यभिचरात्तु जाताना न कुर्यादौर्ध्वदैहिकम ॥

इति वचनाच्च अवश्यं कर्तव्यम् । एते पञ्चमहायज्ञाः सततं संप्रयुक्ताः परा गति गमयन्ति ॥

बलीस्तु नाशयेत् पश्चात पत्न्याहृत्य गवे नयेत । काकेभ्यो वा प्रजाभ्यो वा दद्युर्दुःस्वप्न शान्तये ॥ अत्र विशेषः—

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ॥

एकभाण्डेन पचता पुंसा पञ्च क्रियाः कथम् ।
एक एवाऽऽचरेत्तत्र पृथक्कुर्युः गृहे गृहे ॥ एव न्यायेन कुर्यात् ॥

अथ पञ्चमहायज्ञ वैश्वदेव मन्त्राणामध्ययने द्वादशरात्रं क्षारलवण-वर्जमधश्शयनं ब्रह्मचर्यं च कृत्वा त्रिरात्रोपोषिताध्ययन कुर्यात् । गुरवे वरं दद्यात् ॥

अथ बहु ब्राह्मण भोजनेषु कथम्? बहु ब्राह्मणपाकेषु मुख्यः कर्ता वयोऽधिकः । पञ्चयज्ञान् यथाऽन्येषा हुतशेषं समर्पयेत् ॥ अन्ये सर्वेऽपि तोयैर्वा यज्ञान् कुर्युः जपेन वा ॥

## अथ पञ्च महायज्ञाकरण प्रायश्चित्तम् ॥

एतेभ्यः पञ्चयज्ञेभ्यो यज्ञ एकोऽपि हीयते ।
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥

द्व्यहं त्र्यहं चतु॰ पञ्च प्रामादादकृतेषु तु ।
तिस्रः तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥

दशाहं द्वादशाहं वा विच्छिन्नेषु तु सर्वशः ।
चतस्रोऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः ॥

इति पञ्चमहायज्ञाना एको यज्ञः अकृतश्चेत् एकदिनं पञ्चमहायज्ञा-नामकरणे चतुर्गृहीतेन मनस्वत्याहुति. कार्या ॥ द्वितीयदिनमारभ्य पञ्च दिना-करणे मनस्वती हुत्वा तिस्रस्तन्तुमतीश्च हुत्वा चतुर्गृहीतेन—

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्। अनुल्बणं वयत जोगुवा मपो मनुर्भव जनया दैव्यं जन ँ स्वाहा। अग्नये तन्तुमत इदम्॥ उद्बुध्य स्वाग्ने प्रति जागृह्येन मिष्टापूर्ते स ँ सृजेथामयं च। पुनः कृण्व ँ स्त्वा पितरं युवानमन्वाता ँ सीत् त्वयि तन्तुमेन ँ स्वाहा। अग्नये तन्तुमत इदम्॥ त्रय स्त्रि ँ शत्तन्तवो ये वितत्निरे य इमं यज्ञ ँ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवा ँ अप्येतु स्वाहा। अग्नये तन्तुमत इदम्॥

इमंमे-वरुण, तत्वायामि, त्वन्नो अग्ने, स त्वन्नो अग्ने इति चतस्रोवारुणीर्जपेत्॥ सप्तम दिवसादि दशमदिवस पर्यन्तमकृतप्रायश्चित्तं मनस्वतीं तन्तुमतीर्वारुणीश्च जुहुयात्॥ दशाहाकरणप्रायश्चित्तार्थं मनस्वतींतन्तुमती वारुणीश्च हुत्वा चतस्रोऽभ्यावर्तिनीर्जुहुयात्। एवं द्वादशाह वा द्वादशाहादूर्ध्वं वा विच्छिन्ने अभ्यावर्तिनं हुत्वा, कार्यः तान्तुमतचरुः। अग्निस्तन्तुमान् प्रीयतामिति पुण्याहम्। अग्निमुखान्ते चतुर्गृहीतेन अग्नेऽ-भ्यावर्तिन् अग्ने अङ्गिरः पुनरूर्जा सहरय्या इत्यभ्यावर्तिनीभिः आज्याहुतीर्हुत्वा–

अग्नेऽभ्यावर्ति न्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा। अग्नयेऽभ्यावर्तिन इदम्॥ अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः। तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि स्वाहा। अग्न+न इदम्॥ पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः स्वाहा। अग्न+नइदम्॥ सह रय्या नि वर्तस्वाऽग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि स्वाहा। अग्न+न इदम्॥

पश्चा जुहोति—त्वन्नस्तन्तुः स्वयं कृण्वान इति द्वाभ्याम्—

त्वन्नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः। त्वयाऽग्ने पृष्ठं वयमारुहेमाथा देवैस्सधमादं मदेमो३म् स्वय वृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः। प्रत्न७ सधस्थमनु पश्यमान आ तन्तुमग्निर्दिव्यन्ततान स्वाहा। अग्नये तन्तुमत इदम्॥

पुरस्ताल्लक्ष्मा पुरोनुवाक्य,तामनूच्य उपरिष्टाल्लक्ष्मा याज्या इतिन्यायेन॥ अथ व्याहृतीभिराज्याहुतीर्हुत्वा स्विष्टकृदादिसमानम्॥

अद्भिः कृतेन जपेन वा क्रतुफलंभवति॥ सूतकादिष्वकरणे निषिद्धत्वा-द्दोषो नास्ति। यथा सूतकादौ जपादि दर्शादिश्राद्धाकरणे न दोषः। तथाह—

राष्ट्रक्षोभे च रोगार्तौ दुर्भिक्षे मृतसूतके ।
सन्ध्यावन्दन विच्छित्तिर्न दोषाय कदाचन ॥

इत्यादिना विच्छिन्नदोषो नास्ति । बुद्धि पूर्वं नात्र वर्तते । मृत सूतक विना पश्चात् प्रायश्चित्त कर्तव्यम् ॥ प्रथमारंभ विना द्वादशाहादूर्ध्वं यावत्कालं विच्छिन्नं तावत्कालस्यापि तान्तुमतः चरुः कार्यः ॥

## ॥ अथ वैवाहिकश्राद्धम् ॥

दशमेऽहनि वा अपरपक्षे वाऽऽचरणप्रकारः । दशमेऽहनि अयुग्मा ब्राह्मणाः श्राविता भवन्ति इति सूत्रम् । वर्गद्वयं समुद्दिश्य श्राद्धमाद्यन्त-दैविकम् । इति वचनात् द्वौ दैवे पितृकार्ये च त्रीन् । एकैकमुभयत्र, वा इति वचनाच्च विश्वेदेवार्थमेकः सपत्नीक पितृ पितामह प्रपितामहार्थमेकः सपत्नीक मातामह मातुःपितामह मातुःप्रपितामहार्थमेकः विष्ण्वर्थमेकः इति चत्वारो ब्राह्मणाः ॥

कथ पत्नीवरणम् — अष्टकासु च वृद्धौ च गयाया च महालये । मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥ इति वचनोक्तश्राद्ध व्यतिरिक्तश्राद्धेषु सर्वेषु पत्युः कृते पत्न्यपि सहैवाऽऽगत्य भुङ्क्ते । पार्वणश्राद्धवत्सर्वं कुर्याच्च ब्राह्मणोद्वासन-पर्यन्तम् ॥ अत्रविशेषः—स्वधाग्रहणं पात्रद्वये वर्गद्वयस्य । कुण्डद्वय पाद-प्रक्षाळनार्थम् । शेषं समानम् । भुक्तवतोऽनुव्रज्य अन्नशेषेण तिस्र आहुती-र्जुहोति । दक्षिणेनाऽग्निं दक्षिणाग्रान् दर्भान् सस्तीर्य तेष्वन्नशेषैः त्रीन् पिण्डान् ददाति - एतत्ते तत देवदत्तशर्मन् ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनः तेभ्यश्च याः पत्नयः (तेभ्यः) ताभ्यश्च स्वधा नमः ॥ अथ द्वितीयं ददाति एतत्ते पितामह यज्ञदत्तशर्मन् ये ते मातामहाः इत्यादि स्वधानमइत्यन्तम् । तृतीयं ददाति—एतत्ते प्रपितामह विष्णुमित्रशर्मन् ये ते मातामहाः इत्यादि

स्वधानम इत्यन्तम् ॥ अथ बर्हिषि हस्तलेपं निमार्ष्टि पिण्डान् दक्षिणतः ये नः पतिता गर्भा असृग्भाज उपासते । तेभ्यः स्वजा स्वधानमस्तृप्णुवन्तु मदन्तु च ॥ ये आमा ये च पक्का ये च दुष्टाः पतन्ति नः । तेभ्यः स्वजा + मदन्तु च ॥ ये कुमारा यास्त्रियो येऽविज्ञाताः पतन्ति नः । तेभ्यः स्वजा + मदन्तु च इति च ॥ अत्र पिण्डसमीपे अञ्जनाभ्यञ्जनवासासि गन्धपुष्पतांबूलानि च दत्वा । अथैनान् संक्षालनेन अपसव्यं त्रिः परिषिञ्चति येसमानाः, ये सजाताः, इति द्वाभ्या ऊर्जंवहन्त्या च

ये समानाः समनसः पितरो यमराज्ये । तेषा लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पता मस्मिन् लोके शतꣳ समाः ॥ ऊर्ज वहन्तीरमृतं घृतं मधु

पयः कीलाल परिस्रुतम् स्वधा स्थ तर्पयत मे पितॄन् ॥ तृप्यत तृप्यत तृप्यत ॥ ये समाना ये सजाता इति द्वाभ्या उपतिष्ठते इति केचित ॥ पिण्डान् काकेभ्यो दद्यात् । अप्सु वा प्रक्षिपेत् ॥ जयादि संस्रावान्तं कृत्वा स्वस्तिमङ्गलसंयुक्तो ग्रामाद्बहिः पन्त्या सह निष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य [चित्रियमश्वत्थम्] त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयित्वा चित्रियाणि प्रीयन्तामिति पुण्याहम् ॥ व्रतोद्दिष्टं च ब्राह्मणेभ्यो दत्वा यानेन पद्भ्या वा स्वस्तिमङ्गल्युक्तो गृहं गत्वा परिषेचनादि समाप्याऽऽशीर्वाद गृहीत्वा गुरवे वर दत्वा तदानीमेव अग्न्याधेयस्यारम्भः ॥

अत्र विवाहो व्याख्यात इत्युक्तत्वात् इदानीमेव विवाहसमाप्तिः ॥

वैवाहिकश्राद्धकर्ता तिलोदकं न दद्यात्। शुभ श्राद्धे सपिण्डान्ते तिलोदक निषेधात्। जीवति पितरि वा वैवाहिक श्राद्धे तिलोदक प्रदानं न कुर्यात् ॥

अग्न्याधानं कर्तुमशक्तः औपासनं वा ध्रियमाणः दुर्ब्राह्मणो न भवति। दशमेऽहनि कृत्यद्वयं दैवात्तत्काले अकृतेऽपि सीमन्तात्पूर्वं अवश्यं कर्तव्यम्। तत्कालातिक्रमे प्रायश्चित्तं चोच्यते। यज्ञसमृद्धीः अनाज्ञातमिति त्रयम्, ब्रह्म प्रतिष्ठा [35 पृष्ठे]

यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम्। अरायो अस्मा अभि दुच्छुनायतेऽन्यत्रास्मन्मरुत स्तन्निधेतन स्वाहा। मरुद्भ्य इदम्॥

पाहि नो अग्न इति पञ्च मिन्दाहुती व्याहृतीश्च प्रायश्चित्तं हुत्वा दशमेऽहनि उक्तकर्मद्वयं कुर्यात् ॥ यद्वा तत्वविद्ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्। एष वा अग्निर्वैश्वानरः यद्ब्राह्मण इति सूत्रोक्त प्रकारेण वा कुर्यात् ॥ यद्वा तिस्र आहुतीः पक्षेण वा कुर्यात्। तत्र पूर्ववद् ब्राह्मणान् स्नातानाहूय करणादि कृत्वा आसनेषु उपवेश्य तत्र स्वधा गृहीत्वा अग्नौ करिष्यामीत्यनुज्ञाप्य औपासने पचने वा मेक्षणं तूष्णीं संमृज्य मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति। सोमाय पितृपीताय स्वधानमःस्वाहा। सोमाय पितृपीतायेदम् ॥ यमायाङ्गिरस्वते पितृमते स्वधानमः स्वाहा। यमायाऽङ्गिरस्वते पितृमत इदम् ॥ अग्नये कव्य-वाहनाय स्विष्टकृते स्वधानमःस्वाहा। अग्नये कव्यवाहनाय स्विष्टकृत इदम् ॥ इति हुतमेवास्य तत् भवति ॥ अथ ब्राह्मणान् भोजयित्वा उद्वास्य पूर्ववत्

पिण्डत्रय दानादि चित्रिय कर्मादि कुर्यात ॥ यद्वा ब्राह्मण भोजनं विना तिस्र आहुतीर्हुत्वा पूर्ववत्पिण्डदानादि कुर्यात। अथवा पिण्डपितृयज्ञ कल्पविधानेन वा कुर्यात ॥ एवं आपद्विषये कर्तव्यम् ॥ न च नित्यं तु कारयेत। तदा पितृणामनृणो भवति इति विज्ञायते ॥

यद्वा तिस्र आहुतीरतु अपूपेन वा आमिक्षया वा कुर्यात। इति पक्षान्तरम् ॥

## ॥ स्थालीपाकारंभ कालः ॥

पाकयज्ञसमारंभ मन्वारभं तथैव च ॥
पौर्णमास्यां यजेदादौ दर्शे तु न कथंचन।

तथाच ,तिः यत्पौर्णमासीं पूर्वामालभेत इति ॥

अधिमासे च संसर्पे मौढये च गुरु शुक्रयोः।
अन्वारंभं न कुर्वीत ग्रहणे चन्द्रसूर्ययोः ॥
मौढ्याधिमास संसर्प मलमासादि दूषिते।
चन्द्र सूर्योपरागे च आरभेन्नाशमाप्नुयात ॥
आसन्न पौर्णमासीतु मलमासादि दूषिता।
मौढयोपराग युक्ताऽपि कथमारंभ इष्यते ॥

अत्रविशेषः —

मौढयेवाऽप्यधिमासे वा ग्रहणे चन्द्र सूर्ययोः।
अन्वारंभं प्रकुर्वीत समनन्तर पर्वणि ॥

आसन्न पौर्णमासी मौढयादि दूषितापितत्र प्रथमस्थालीपाकं कुर्यात। आसन्नपर्व अमावास्य.चेत् न कुर्यात ॥

अतिकालान्तरारभाद्यजमानस्य पावकः।
आयुः श्रियंयशो हन्ति तस्माद्यज्ञं समारभेत् ॥

अतीतकाले कुर्याच्चेत् यज्ञारंभः कथं भवेत्।
प्रायश्चित्तं हिरण्याद्यैः कृत्वा यज्ञं समारभेत् ॥

विवाहमध्ये आगतश्चेत्कथं अत्राह —

विवाह शेषमध्ये तु पर्वण्युत्पतिते सति।
स्थालीपाकं प्रकुर्वीत सायं प्रातर्हुतेऽनले ॥

औपासनारभात्पर पर्वणिविद्यमाने स्थालीपाकं कुर्यात्। आषाढ भाद्रपद चाप कुंभादि मासेष्वपि उक्तदूषणवर्जिते सति तत्रापि कुर्यात् ॥

## ॥ अथ प्रथमस्थालीपाकः ॥

आज्य संस्कृत्य कूश्माण्डैर्जुहुयात्। कर्मादिष्वेतैर्जुहुयाव् इति श्रुतिः

पर्वप्रतिपदोस्सन्धिः मध्याह्ने पूर्वतोऽपिवा।
अन्वाधानं पूर्वदिने तद्दिने याग इष्यते ॥

मध्याह्न इति मध्यपर्यन्त इत्यर्थः।

परतश्चेत् परेह्नीष्टिस्तद्दिनेऽन्वाहितिर्भवेत् ॥

पर्वणो यःतृतीयांशः आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेय. प्रातरुक्तो मनीषिभिः ॥

प्रतिपद्य प्रविष्टायां यदिवेष्टिः समाप्यते।
पुनः प्रणीयकृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥

सन्धिर्यद्यपराह्णेस्याद्याग· प्रातः परेहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

अयं विधिः पर्वद्वयेऽपि सर्वसूत्रानुष्ठानविषयः ॥ बौधायनीयानां पौर्णमास्यामेवाऽयं विधिः । अमावास्या स्थालीपाकेष्टिविधौ तु विशेषः —

अमावास्या हि पूर्वेद्युरदृष्टेन्दुः प्रशस्यते ।
दृष्टचन्द्रमभूद्गौणो यागः स्यादपरेऽहनि ॥

अदृष्टेन्दु दिने कुर्याद्यागमेव विशेषतः ।
दृष्टचन्द्रदिने गौणे देवा यान्ति पराङ्मुखाः ॥

चन्द्रमस वा संपूर्ण वा विज्ञाय अग्नीनन्वादधातीति न्यायेन अदृष्टचन्द्रदिवसे इष्ट्यादि कर्तव्यम् ॥ तथाह —

यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत् ॥

कालादर्शे —

द्वितीया त्रिमुहूर्ता चेत् प्रतिपच्चापराह्णिकी ।
अन्वाधानं चतुर्दश्या परतश्चन्द्रदर्शनात् ॥
अत्र अपराह्णं तु अहस्त्रिधा कृत्वा तृतीयभाग एव ।

अथ दीपिका वचनम् —

इष्टेरलं प्रतिपदोह्नि नाड्यः [तदैव]
सप्ताष्ट वा यत्र भवन्ति तस्याम् ।
क्षीणासु नाडिषु भवेच्च पूर्वः
कल्पोऽथ वृद्धौ तु भवेद्द्वितीयः ॥

इष्टिप्रयोगपर्याप्ते प्रविष्टे प्रतिपत्तिथौ ।
यष्टव्यमपराह्णेऽपि नाऽलं चेदुत्तरेऽहनि ॥

अथ विशेषः—

चतुर्दशीचतुर्यामे अमा यत्र न विद्यते ।
श्वोभूते प्रतिपद्युक्ते भूते कव्यादिकाः क्रियाः ॥

अपरः—

द्वितीया प्रतिपद्युक्ता भूते कव्यादिकाः क्रियाः ।
अमायां तु दिवा युक्ता प्रतिपद्धटिकापि वा ।
तत्रैवेष्टिसमाप्तिः स्यात्तिथिवृद्धिर्भवेन्न चेत् ॥

**अथ विशेषः –**

द्वितीयास्तमवेलाया घटिकैकापि दृश्यते ।
तत्र यागं न कुर्वन्ति विश्वे देवाः पराङ्मुखाः ॥

द्वितीयापि दिवा युक्ता नाड्येका प्रतिपत्तिथौ ।
अमावास्याचतुर्थांशे यागस्तत्र समाप्यते ॥

इत्यादि वचनार्थः दिवा संपूर्णप्रथमा चेत् अमावास्याया पिण्ड पितृयज्ञः । प्रथमादिने यागः ॥ प्रतिपद्दिने द्वितीया एकघटिकापि स्थिता चेत् चतुर्दश्यां पिण्ड पितृयज्ञः । अमाया यागः । तत्र एक घटिकाप्रतिपद्यागे समाप्तिः । प्रतिपत्प्रविष्टा चेत् अमाचतुर्थभागे आरभ्य तत्रैव समाप्तिः । प्रतिपद्दिवि द्वितीयायुक्तविशेषे [सप्ताष्ट वा] इष्टि प्रयोग पर्याप्ते इत्यादिवचनस्याऽऽपत्कालः । तस्मात् पूर्वेद्युः पितृभ्यः क्रियते । उत्तरेऽहनि देवान् यजते इति न्यायः ॥ एवमनाहिताग्नेरपि न्यायः ॥ अशक्तः गौणकाले वा आद्याः प्रतिपदस्त्रय इति न्यायेन कुर्यात् । तत्र विघ्ने सति आकालात्काल इष्यत इति न्यायात् पञ्चम्यां दशम्यां वा कुर्यात् ॥ तत्र–नन्दा भद्रा जया रिक्ता पूर्णा चेति पुनः पुनः । तिथयः प्रथमाद्यास्तु (तिपाद्यास्ताः) स्वनामसदृशाः फले ॥ इति दशमी पञ्चम्योः पर्वनामत्वाद्विशेषः ॥ एव मुख्यकालातिक्रमे गौणकाले

कृतेऽपि प्रायश्चित्तं–पाहिनो अग्न इति पञ्च स्रुवाहुतीर्हुत्वा पक्वैः ॥ नैकेह्नि पित्र्यं दैवं च कुर्वन्ति ॥ यद्येकाह्नि पित्र्यं दैवं च कुर्वन्ति प्रजास्य पुन(त्र): प्रमायुका (को) भवति । तस्मात् पितृभ्यः पूर्वेद्युः क्रियत इति न्यायः ॥

स्थालीपाकस्य पूर्वेद्युः इध्माबर्हिः करोत्यथ ।
क्षारं लवणतांबूलं तैलाभ्याङ्गं च मैथुनम् ॥
वर्जयित्वैक भुक्तस्सन् पर्वणो व्रतमाचरेत् ॥
रजस्वला भवेत् पत्नी संकल्पात्कर्मणः परम् ।
अपरुध्य यजेत्पत्नी तत्पूर्वं यदि नाऽऽचरेत् ॥

तत्राग्निः प्रीयतामिति पुण्याहम् । प्रथमस्थालीपाके पूर्वोक्तवत् कूश्माण्ड होमानंतरं संकल्पः । अग्निमुखान्ते अत्रत्य प्रायश्चित्तं–त्वमग्ने व्रतपाः यद्वो वयमिति द्वाभ्यां चतुर्गृहीतेन हुत्वा पक्वाज्जुहोति अग्निर्मूर्धा, भुव, इति । अग्निर्मूर्धा+ जिन्वतो३म् भुवो+वाह॰ स्वाहा [126 पृष्ठे] स्विष्टकृतमवदायान्तःपरिधि सादयित्वा आज्याहुति जुहोति–ऋषभं वाजिनं वयमिति पौर्णमास्याम् ।

ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहता॰ सुवीर्य॰ रायस्पोष॰ सहस्रिणं प्राणाय सुराधसे पूर्णमासाय स्वाहा । पूर्णमासायेदम् ॥

अमावास्या सुभगा सुशेवा इत्यमावास्यायाम्—

अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहता॰ सुवीर्य॰ रायस्पोष॰ सहस्रिणमपानाय सुराधसेऽमावास्यायै स्वाहा । अमावास्याया इदम् ॥

स्विष्टकृतं हुत्वा उपरिष्टात्स्रुवाहुतिः । मेक्षणं प्रहृत्य मस्राव हुत्वा जुहू संक्षालनमन्तःपरिधि निनयति वैश्वानरे हविरिति ॥

वैश्वानरे हविरिदं जुहोमि साहस्रमुत्स॰ शतधारमेतम् । तस्मि न्नेष पितरं पितामहं प्रपितामहं बिभरत्पिन्वमाने ॥

निर्णिज्य स्रुचं निष्टप्य अद्भिः पूरयित्वा बहिःपरिधि निनयति इम॰समुद्रमिति –

इम॰ समुद्र॰ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहाना मदिति जनायाग्ने मा हि॰सीः परमे व्योमन् ॥

अनूयाजसमिधमाधाय इत्यादि ब्रह्मोद्वासनात कृत्वा पक्वादुपादाय प्राश्नाति । आयुरसीति प्राश्याप आचम्य जठरमभिमृशति– यत इन्द्रभयामहे, स्वस्तिदा विशस्पतिरिति द्वाभ्याम् । उपस्थानादि समानम् ॥

स एष आघारवान् आग्निहोत्रिको वाप्यापूर्विको वा कार्यः ॥

## पिण्डपितृयज्ञः ॥

अमावास्याया पिण्डपितृयज्ञः प्रसिद्धः । गार्हपत्यशब्दो लुप्यत इति वचनात् अनाहिताग्निरपि पिण्डपितृयज्ञं कुर्यात् गार्हपत्यशब्दं विना ॥ अमावास्यायामपराह्णे दर्शश्राद्धानन्तर प्राचीनावीती संकल्प्याग्नि निधाय परिसमूह्य सिकतास्थण्डिल न कार्यम् ॥ पात्रेणैव सह कुर्यात् ?। दक्षिणाग्रैर्दर्भैः परिस्तीर्य दक्षिणतः पात्राणि सादयेत्— आज्यस्थाली स्रुवं चरुस्थालीं 'मेक्षणं सकृदाच्छिन्नं उदपात्रं प्रोक्षणीं स्फ्य कमण्डलु दशासूत्रं समिधं एरकामुपबर्हणं आंजनमभ्यंजनं च दक्षिणान्तं संसाद्यएकपवित्रं कृत्वा प्रोक्षणीः संस्कृत्य उत्तानानि

पात्राणि प्रोक्ष्य पवित्रवत्यां स्थाल्या चरुं निर्वपति—पितृभ्यो जुष्टं निर्वपामीति तूष्णी वा । एवमेव प्रोक्ष्य सकृत्सकृदत्र । चरुं श्रपयित्वा, पक्वमोदनमिति न्यायं वा कुर्यात् । चरुं प्रोक्ष्याग्नावधिश्रित्य आज्यं दक्षिणतः संस्कृत्य प्रोक्ष्य उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवं च सम्मार्ष्टि । चरुमभिघार्य दक्षिणतः प्रतिष्ठितमभिघार्य तूष्णी मेव सव्यं परिषिच्य तूष्णी समिधमाधाय—

यज्ञोपवीती मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति— सोमाय पितृपीताय स्वधानमः स्वाहा । सोमाय पितृपीतायेदम् ॥ यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा । यमायाङ्गिरस्वते पितृमत इदम् ॥ अग्नये कव्यवाहनाय स्विष्ट-कृते स्वधा नमः स्वाहा । दक्षिणार्धपूर्वार्धे होमः । अग्नये कव्यवाहनाय स्विष्टकृत इदम् ॥ अपः स्पृष्ट्वा मेक्षणमग्नौ प्रहृत्य ।

प्राचीनावीती —दक्षिणेनाग्निं स्फ्येनोल्लिख्यावोक्ष्य सकृदाच्छिन्नं बर्हिः दक्षिणाग्रं स्तीर्त्वा—सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन् सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चाऽनुगैः सह ॥ इति मन्त्रेण ॥ अथ पितॄनावाहयति—

उदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैः सह ॥ असु गमाः सत्ययुजोऽवृकास आ नो हवं पितरोऽद्यागमन्तु एह गच्छन्तु पितरो हविषे अत्तवे ॥ अस्मिन्यज्ञे बर्हिष्यानिषद्य मा वीरः प्रमायुनगिति ॥ एरका तत्पुरस्तात् दक्षिणाग्रां निधाय तस्यामुपबर्हणं दक्षिणतो

निधाय-आसीन७शयनं चेमे तयोः सोम्यास आगताः प्रिया जनाय नो भूत्वा शिवा भवत शंकराः। इति मन्त्रेण एरकोपबर्हणे कृत्वा बर्हिषि दक्षिणान्त मद्भिर्मार्जयते—मार्जयन्तां पितरः मार्जयन्तां पितामहाः मार्जयन्तां प्रपितामहाः इति। अथ पात्रादन्नमुद्धृत्य उपस्तीर्याभिघार्य ततान् त्रीन् पिण्डान् दक्षिणापवर्गान्ददाति - एतत्ते तत देवदत्तशर्मन् ये च त्वामनु। एतत्ते पितामह+शर्मन् ये च त्वामनु। एतत्ते प्रपितामह+ शर्मन् ये च त्वामनु। अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वा पिण्डाननुमन्त्र्य उदङ्ङावृत्य ऊष्मणो निवृत्य तमुपविश्य व्यावृत्त ऊष्मेति प्राहुः अथाभिपर्यावृत्य ये समाना ये सजाता इति द्वाभ्याम् अवशिष्टं चरुमाघ्राय पूर्ववत्पिण्डेष्वद्भिर्मार्जयित्वाऽऽञ्जनं ददाति--आञ्जन्तां पितरः आञ्जन्तां पितामहाः आञ्जतां प्रपितामहा. इति॥ अभ्यञ्जनं ददाति अभ्यञ्जन्तां पितर. अभ्यञ्जन्तां पितामहाः अभ्यञ्जन्तां प्रपितामहा· इति॥ वासांसि ददाति—एतानि वः पितरो वासांसि पितामहा वासांसि प्रपितामहा वासांसि॥ अष्टमासाधिक षष्टिवर्षात्परं प्रकोष्ठरोम छिन्द्यात॥ अथपिण्डान् षड्भिर्नमस्कारैः यथास्थमुपतिष्ठते—नमो वः पितरो रसाय पितरो नमो वो य एतस्मिन लोके स्थ युष्मा७ स्तेऽनु येऽस्मिन् लोके मां तेऽनु य एतस्मि ल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिल्लोकेऽहं तेषां वसिष्ठो भूयासम्। नमो वः पितरः शुष्माय पितरो नमो वो+भूयासम्। नमो वः पितरो जीवाय पितरो नमो वो+भूयासम्। नमो वः पितरः स्वधायै पितरो

नमो वो + भूयासम् । नमो वः पितरो मन्यवे पितरो नमो वो + भूयासम् ।

नमो वः पितरो घोराय पितरो नमो वो + भूयासम् ॥ एवं सर्वत्रानुषङ्गः । अथ

वीरं याचते—वीरं मे पितरो दत्त पितामहा दत्त प्रपितामहा दत्त पितृमानहं युष्माभिर्भूयास॰ सुप्रजसो मया यूयं भूयास्त ॥ अथ पितॄनुत्थापयति—

उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनवे[नुया]ता पुराणम् । धत्तादस्मासु

द्रविणं यच्च भद्रं प्र णो ब्रताद्भागधां देवतासु ॥ अथ पितननुगच्छेत् - यन्तु

पितरो यथालोक मनसा जवेन । परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः ।

अथा पितॄन्त्सुविदत्रा॰ अपीत यमेन ये सधमादं मदन्ति ॥ अथ तिसृभिर्मन

आह्वयते[ति] - मनो न्वा ह्वामहे नाराश॰सेन स्तोमेन पितॄणा च मन्मभिः ॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ पुनर्नः

पितरो मनो ददातु दैव्यो जनः । जीवं व्रात॰ सचेमहि ॥ अथ पिण्डान्

सह बर्हिषाऽग्ना वनुप्रहरति॥ पात्राणि द्वन्द्वं यथास्थानं गमयित्वा ॥ यज्ञोपवीती

सन् अग्निमुपतिष्ठते - प्रजापते + रयीणाम ॥ यदन्तरिक्ष + मामनेनसम् ॥

इति द्वाभ्याम् ॥ जीवपिता.• . . दहेदत्रैव वाऽनले । अश्नीयाद्वा.. .. . ...

दैवात् पिण्डपितृयज्ञाकरणे चतुर्गृहीतेन सप्तहोतारं जुहोति—महाहविर्होता। सत्य हविरध्वर्युः। अच्युतपाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्यश्चा ऽप्रतिधृष्यश्च यज्ञस्याऽभिगरौ। अयास्य उद्गाता। वाचस्पते हृद्विधे नामन्। विधेम तेनाम। विधेस्त्वमस्माकं नाम। वाचस्पतिः सोममपात्। मादैव्य स्त-न्तुश्छेदि मा मनुष्यः। नमो दिवे। नमः पृथिव्यै स्वाहा। वाचस्पतये ब्रह्मण इदम्॥

## ॥ आग्रयणम् ॥

शरत्काले पौर्णमास्या अमावास्यायां वा नवव्रीह्याग्रयणं आपूर्विक विधानेन करिष्य इति संकल्प्य। इन्द्राग्नी विश्वेदेवा द्यावापृथिवी च प्रीयन्ता-मिति पुण्याहं वाचयित्वा। उल्लेखनादि देवतार्चनान्तं कृत्वा समिधमाधाय मिन्द्राहुती व्याहृतीश्च हुत्वा आघारावाघार्य आज्यभागौ च हुत्वा चरुप्रायश्चित्तं कृत्वा मेक्षेणेनोपघातं जुहोति पक्वात्--इन्द्राग्निभ्या७ स्वाहा इन्द्राग्निभ्या-मिदम्॥ विश्वेभ्यो देवेभ्यः स्वाहा विश्वेभ्यो देवेभ्य इदम्॥ द्यावापृथिवी-भ्या७ स्वाहा॥ द्यावापृथिवीभ्यामिदम्॥ स्विष्टकृतमवदाय निधायाज्याहुती-रुपजुहोति पञ्चाऽज्यानीभिः—शतायुधाय, ये चत्वार, ग्रीष्मो हेमन्तः, इदुवत्सराय, भद्रान्नः श्रेयः—

शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे। शत यो नः शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा। इन्द्रायेदम्॥

पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषा यो अज्यानिमजीतिमा-
वहात्तस्मै नो देवाः परि दत्तेह सर्वे स्वाहा । द्यावापृथिवीभ्यामिदम् ॥ ग्रीष्मो
हेमन्त उत नो वसन्तः शरद्वर्षाः सुवित नो अस्तु ।तेषामृतूना॰ शत-
शारदाना निवात एषामभये स्याम स्वाहा । ग्रीष्मादिभ्य इदम् ॥ इदुवत्सराय
परिवत्सराय संवत्सराय कृणुता बृहन्नमः । तेषां वय॰ सुमतौ यज्ञियानां
ज्योगजीता अहताः स्याम स्वाहा । इदुवत्सरादिभ्य इदम् ॥ भद्रान्नः श्रेयः
समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितो आ। विशास्व
शं तोकाय तनुवे स्योनः स्वाहा । देवेभ्य इदम् ॥

मेक्षणेन अग्नये स्विष्टकृते स्वाहेति स्विष्टकृतं हुत्वा अपःस्पृष्ट्वा मेक्षणं प्रहृत्य मिन्दाहुती व्याहृतीर्हुत्वा अग्नि परिषिच्य अपरेणाग्नि हुतशेषं सगणः प्राश्नाति भद्रान्नः श्रेयः इति । अथ जठरमभिमृशति यत इन्द्र द्वयेन [32 पृष्ठे स्वाहाकार वर्जितेन] ॥ अथाग्निमुपतिष्ठते ।

अथ देवता निवेदनम् ॥

पञ्चमहायज्ञान् ब्राह्मणभोजनं च कृत्वा नवान्नेन ततः स्वयं भोजयेत् ॥

एवं कर्तुमशक्तः औपासने नूतनव्रीहिभिः तण्डुलैर्वा हुत्वा देवपूजादि कृत्वा भोजयेत् ॥

यद्वा- हु(श्रु)तवतो ब्राह्मणस्य हुतशेषं याचयित्वा प्राशयेत् ॥

आग्रयणेनानिष्ट्वा नवान्न प्राशने--पाहिनो अग्न इति पञ्चभिः प्रायश्चित्तं कुर्यात् । उच्यते-- अत्र सूत्रोक्तत्वादवश्यं कर्तव्यम् । किं च उक्तस्थलं विना आघारवान् आग्निहोत्रिकं आपूर्विकं च मिथस्संयुज्य न कुर्यात् । उक्तस्थल तु आग्रयणम् । तत्र आपूर्विकमाघारतन्त्रं च उच्यते । उभयसंसर्गस्थलमाग्रयणमेव इति शिष्टिभाष्यकारैरुक्तम् । आग्रयण देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयात् इति वचनात् । याज्या पुरोनुवाक्यामन्त्राः अनुक्ताः । अत एव देवतानामानि गृहीत्वा होमः ॥ एवं यवाग्रयणं ग्रीष्म-[वसन्त]काले । शरदि[वर्षासु]श्यामाकाग्रयणं श्यामाक प्राशनमन्त्रः । अग्निः प्रथमः प्राश्नातु इति

अग्निः प्रथमः प्राश्नातु । स हि वेद यथा हविः । शिवा अस्मभ्य-मोषधीः । कृणोतु विश्वचर्षणिः ॥

व्रीहि प्राशन भद्रान्नः श्रेय इति ॥ यवान्न प्राशनं-एतमुत्यं मधुना इति ॥

एतमुत्य मधुना संयुतं यवम् । सरस्वत्या अधि मनाव चर्कृषुः । इन्द्र आसीत् सीरपतिः शतक्रतुः । कीनाशा आसन्मरुतः सुदानवः ॥

नाभ्यभिमर्शनम ॥ आश्वलायनोक्तमन्त्रेण वा कुर्यात् -- अमोऽसि प्राणतदृतं ब्रवीम्यमोसि सर्वान(ण्य)नुप्रविष्टः । स मे जरा रोगमपनुद्य शरीरादमाम एधि मा मृधाम इन्द्र ॥

॥ आग्रयण कर्मकालः ॥

पर्वणोश्च शरत्काले देवतारेषु वाऽथवा ।

व्रीह्याग्रयण कालस्तु पौष्णे वा ज्योतिषोक्तमे ॥

## आर्तवफलम् - .

सूर्ये स्यात् व्याधिरुत्पन्ना सोमवारे पतिव्रता ।
कुजे दुःखमवाप्नोति बुधे पुत्रधनागमः ॥
सर्वं संपद् गुरोर्वारे शुक्रे स्याद्भाग्यवर्धिनी ।
शनैश्चरे तु नाशः स्यात् पुष्पवत्याः फलं विदुः ॥

## तिथिफलम्

प्रथमायामपुत्रा स्यात् द्वितीयाया शुभा भवेत् ।
तृतीयायां ससन्द्रा स्यात् ? ... . ...
. .... दशम्यां सुख भागिनी ।
एकादश्या तु न भद्रा द्वादश्या विधवा भवेत् ॥
तेजस्विनी त्रयोदश्यां चतुर्दश्यां सुपूजिता ।
पूर्णायां तु न पूर्णा स्यात् कुह्वा चेत्कुलटा भवेत् ॥

## ॥ योगफलम् ॥

विष्कम्भे व्याधिता नारी त्वतिगण्डे दरिद्रता ।
शूले चेत् गर्भभङ्गःस्यात् गण्डे मूर्खा भवेदियम् ॥
व्याघाते शत्रुवद्भूयात् वज्रे वन्ध्या भविष्यति ।
व्यतीपाते पति हन्ति वर्यान्योगे तु दुर्गुणा ॥
परिघे त्वामहन्त्री स्यात् वैधृत्यां कुटिला भवेत् ।
शेषयोगाः शुभाः प्रोक्ताः नारीणा प्रथमार्तवे ॥

## ॥ करण फलम् ॥

भवादिकरणेष्वादौ शोभनाः षट् ततः क्रमात् ।
वन्ध्या दरिद्रता मूर्खा विधवा कुलटा भवेत् ॥

## ॥ राशि फलम् ॥

मेषे तु विधवा नारी वृषभे तु सुधर्मिणी ।
मिथुने भोगिनी प्रोक्ता कटके भ्रष्टचारिणी ॥

सिंहे तु पुत्रलाभःस्यात् कन्याया श्रीमती भवेत् ।
तुलाया तु दरिद्रा स्यात् वृश्चिके परदारिका ॥

धनुःपूर्वे तु कुलटा अपरे तु सुधर्मिणी ।
मकरे मानहीना स्यात् कुंभे तु कुटिला भवेत् ॥

मीने तु सर्वसिद्धिः स्यात् एव पुष्पवतीरिता ।

## ॥ वेळादि फलम् ॥

पूर्वाह्णे तु शुभ प्रोक्तं मध्याह्ने मध्यमं भवेत् ।
सायाह्ने त्वशुभं प्रोक्तं एवं रात्रावपि स्मृतम् ॥

अन्नं पानं घृत दीप हेम गन्धं करे शुभम् ।
अशुभद्रव्य संयुक्ता भवेच्चेदशुभ भवेत् ॥

श्वेतं वा रक्तवस्त्र वा रजो दृष्ट[ष्टौ] तु शोभनम् ।
कृष्ण वा मलिनं छिद्र वासो दृष्टरजोऽशुभम् ॥

शयने रोदने भुक्तौ भर्तृहीना सुखं त्यजेत् ।
सुमङ्गली रजः पश्येत् पति पुत्रवती भवेत ॥

रुग्णा चेद्रोगपीडा स्यात् विधवा विधवा भवेत् ।
कन्यका सर्वसौभाग्य स्वय दुःखवती भवेत ॥

उपवेशे स्थितौ याने मङ्गल्याऽऽयुष्य भाग्यदम् ।
ऋतुकालस्य जामित्रशुद्धि. स्याद्यदि शोभनम् ॥

शुभाः केन्द्रयुता दृष्ट्वा अशुभास्त्रि षडायगाः ।
सर्वदोषान् हरन्त्येव विपरीते विपर्ययः ॥

ऋतुकालस्य दोषोक्त तिथिवारर्क्ष देवताः ।
प्रीति कुर्याद्य[र्वेन्य]थान्यायं गतदोषा श्रियं व्रजेत् ॥

## ॥ अथ ऋतुशान्तिः ॥

अस्याः प्रथमार्तवकाले वर्तमान तिथि वार नक्षत्र योग करण लग्नादि सूचित सर्वदोषशान्त्यर्थं ऋतुशान्तिकर्म करिष्ये । इति सकल्प्य आचार्यं वृणुयात् । आचार्यः संकल्प कुर्यात् । चतुर्थेऽह्नि शान्तिकर्म संकटे पञ्च-मेऽहनि वा कुर्यात् । उद्धत्याऽवोक्ष्य चतुराढकं द्रोणं शिव वा धान्य निक्षिप्य चतुरश्रं स्थण्डिल कृत्वा तन्मध्ये नळिनमष्टदळाकार मुल्लिख्य दूर्वाक्षतफलै रवकीर्य गन्धोदकेनाऽभ्युक्ष्य बृहत्कुम्भं नव (सुष्ठु) रत्नं सुधूपितं तन्तुना वेष्टित स्थाप्य ब्रह्मजज्ञानमित्यृचा । आपो वा इदमित्यनुवाकेनाब्लिंगाभिश्च कुम्भ-मुदकैः पूरयित्वा [पञ्चरत्नं] हिरण्य पञ्च मृत्तिका पञ्च पल्लवान् पञ्च त्वचः* कूर्चं च निक्षिप्य नववस्त्रयुग्मेनाऽऽच्छाद्य चूतपल्लवै र्बिल्वपल्लवैर्वा ऽवकीर्य नाळिकेरफलेनापिधाय दर्भैः प्रच्छाद्य कुम्भमलङ्कृत्य परिस्तीर्य तूष्णीम् । अथ पुरुषं पुण्डरीकाक्ष ध्यात्वा नारायणाय विद्महे इति, त्रीणि पदेतिवा विष्णुमावाह्य, विष्णवे नमः इत्यासनादि दत्वा आपो हि ष्ठेति तिसृभिः स्नानम् । वस्त्रगन्धादिभिः अलंकृत्य फलैः(लानि) निवेद्य ताम्बूलं च प्रदाय—कुम्भ-स्योत्तरतः पञ्चगव्यं योजयेत्—गायत्र्या गृह्य गोमूत्र गन्धद्वारेति गोमयम् । आ प्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम् ॥ एव सपाद्य अष्टौ चतुरो वा ब्राह्मणान्वृत्वाऽभ्यर्च्य सर्वे कुम्भमन्वारभ्य जपेयुः । "ऋतुशान्तिजपं कुरुध्व" [इति कर्ता] कुर्मः इत्युक्त्वा

* गजाश्व रथ वल्मीकमृदमाहृत्य गोकुलात् । चतुष्पथाद्राजगृहात्तुलसी बिल्वमूलयोः । देवालयात्पर्वताद्वा गृह्णीयात्पञ्च मृत्तिकाः ॥ पालाशोदुम्बराश्वत्थ वट प्लक्षक याज्ञिषु । जम्बू बिल्व कपित्थाम्र शिरीषेषुच पल्लवान् ॥ तेषा त्वचश्च पञ्चैव गृह्णीयात्संभवेषु वै ॥ बो-ग-शे-स ॥

[ऋत्विजः] त्रीन् प्राणायामान् कृत्वा जपेयुः—नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्॥ इत्यष्टोतरशतं जपित्वा वेदादीन् अब्लिङ्गान् हिरण्यवर्णाः पवमान इत्यनुवाकौ वरुणसूक्तं श्रीसूक्तं पुरुषसूक्तं पञ्चशान्तिमृचां प्राचीत्यनुवाकं च जपित्वा नमो ब्रह्मण इति त्रिरुक्त्वा प्रणवेनोत्थाप्य पुनःपूजा कृत्वा मनसा देवमुद्वास्य स्पृष्ट्वा कुंभ अथैनामङ्कणे उरुविष्टरे आसीनां प्राङ्मुखीं ऋत्विजोऽब्लिङ्गादिभिः प्रोक्ष्य, ऋतं च सत्यं चेत्यघमर्षणेन [त्रिभिर्मन्त्रैः]स्नापयेयुः। ततः नारी शुष्कवस्त्रमाच्छाद्य प्राङ्मुखी पञ्चगव्यं प्राशयेत्। ततो भर्ता पत्नीमीक्षते॥

अथ होमं कुर्यात्—स्वगृह्योक्त विधानेन श्रोत्रियागारादग्निमुपसमाधाय सपरिस्तीर्याग्निमुखान्तं कृत्वा विष्णुसूक्तेन पालाशी. समिधः ब्रह्मसूक्तेनान्न रुद्रसूक्तेनाज्य प्रत्येकमष्टोत्तरशताहुती. कुर्यात्॥ क्रमेण तानि सूक्तानि प्रत्येकमष्टादश कृत्व आवर्तयेत्॥ अथ ऋकाल नक्षत्रमन्त्राभ्या चतुर्दशाऽऽवृत्तिभिः समिदन्नाज्याहुतिभिः अष्टाविंशति सङ्ख्याकाभिः जुहुयात्। त्र्यंबकेन मन्त्रेण तिलैरष्टोत्तरशतं हुत्वा स्विष्टकृतमवदाय निधायाज्याहुतीर्जुहोति — यो ब्रह्मा ब्रह्मण इत्यष्टर्चेन हुत्वा। स्विष्टकृदादि मंत्रावान्त कृत्वा। प्रथमोदक्यान्ते प्रजापतिरित्ति पुण्याहविधानात् प्रजापतिः प्रीयतामिति पुण्याहम्। परिषेचनादि समानम्॥ भर्तारं पत्नी ईक्षते—ऐन्द्र प्रभो मह्यं दातुमर्हसि। इति॥ तथा सूर्यं दर्शयेत्। * ब्राह्मणेभ्यो दक्षिणा दत्वा आचार्याय विशिष्य दत्वा पञ्चमेऽहनि ग्रहयज्ञं कुर्यात्॥

* स्त्रीधर्मिणी त्रिरात्रं भु स्वमुखं नैव दर्शयेत्। स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुद्ध्यति॥ सुस्नाता भर्तृवदन मीक्षेन्नान्यस्यकस्यचित्। अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत्॥

नक्षत्राणा देवता वारदेवता राशिदेवताः प्रसिद्धाः ॥ तिथिदेवतास्तु ब्रह्मा—अजः, विष्णुः, यमः, चन्द्रमाः, शुक्रः, गुहः, चन्द्रः, वसवः, सर्पाः, धर्मः, रुद्राः, आदित्याः, कामः, कलिः, विश्वेदेवा इति पञ्चदश । अमादेवता पितरः ॥ योगकरण देवता एता एव । अमुक देवस्य उक्त देवताप्रीत्यर्थं यथा संभवं हिरण्यं संप्रददे इत्येव दानकाले विचार्य दुष्टवार नक्षत्र देवताप्रीतिं कुर्यात् । ऋतुसंवेशनक्रमं नियमं च सर्वं पूर्वोक्तम् ॥ हविश्शेषं परैर्नभोक्तव्यम् ।

## औपासनाग्नि समारोपणादिविधिरुच्यते—

त्रिविधं समारोपणम् ॥ अरण्योः समारोपणं--अयं ते योनिरिति,
[108] मथित्वा काले जुहुयात् । एव पुनः पुनः अरण्योः समारोपणम् ॥
अथ समित्समारोपणं— अयं ते योनिरिति । लौकिकाग्निमाहृत्य होमकाले समिधमादधाति -- आजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्याम् । (155) पश्चान्नित्य होमः । एवं पुनः पुनः ॥ अथ आत्मसंमारोपणम् – याते अग्ने यज्ञियेति

या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्माऽऽत्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् । जातवेदो भुव आ जायमानः सक्षय एहि ॥

काले लौकिकाग्निमाहृत्य समिधमादधाति । तस्मिन्नुपावरोहति - उपावरोह जातवेद इति ।

उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजाᳫं रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे ॥

पश्चान्नित्य होमः । एवं पुनः पुनः ॥

अत्र अजस्राग्निः श्रेष्ठः ॥ अरणिसमारोपणं समित्समारोपणं च मध्यमम् ॥ आत्मसमारोपणे तु नाऽप्सु निमज्यात् न मैथुनं व्रजेत् । अत एव आत्मसमारोपणपक्षस्तु अतीव भारः ॥ पालाशाश्वत्थ खादिरौदुंबराणामेकस्मिन् प्रसिद्ध समारोपणम् ॥

**अत्र वचनम् ---**

जायापती द्वौ होमकाले स्वग्राम सीमा मतिलङ्घनाच्च । औपासनं लौकिक एव कुर्यात् । अनुगताग्निवत् पुनश्च सर्वं यजमाने सति ग्राममर्यादा न लघयेत् ॥ १

औपासन लंघयेच्चेत् स लौकिक उदाहृतः ।
यजमानं विना ग्राममर्यादामग्नि न लंघयेत् ॥

पत्नी वा अन्यो वेत्यर्थः पत्नी प्रधानं दम्पत्योः प्रवासश्चेत् स्वयगनः ।
पुत्राद्यभावेतु अग्नि समारोप्य स्वयं व्रजेत् ॥

अजस्राग्निः चरेद्विद्वान् संपन्नं वा स्त्रिया स्वयम् । क्रिमि केशादि युक्तश्चेत् तुषाग्निनरक व्रजेत् ॥ औपासनाग्नावनुगते सति याज्ञियात्काष्ठादग्नि मथित्वा, श्रोत्रियागाराद्वाग्निमाहृत्य अग्न्यनुगत प्रायश्चित्तं करिष्ये । स्थण्डिले अग्नि निधाय व्याहृतीभि रुपस्थानादि कृत्वा आज्यस्थाली स्रुवं जुहूं प्रोक्षणीं च संसाद्य आज्यं सस्कृत्य स्रुक् स्रुवं संमृज्याग्नि परिषिच्याभ्यर्च्य समिधमाधाय चतुर्गृहीतेन आज्याहुतीर्जुहोति ॥ पाहिनो अग्न इति पञ्च ॥ स्रुवाहुती रित्येकः पक्षः ॥ यद्वा अग्निमाहृत्य नित्यवदौपासनं हुत्वा पत्नी वा भर्ता वा उपवासं दिवा वा रात्र्या वा कुर्यात् ॥ एवं द्वादशाहपर्यन्तमनुगत प्रायश्चित्तमेव । एकाहात्परं अहुत प्रायश्चित्तं कर्तव्यम् एकाहम हुते मनस्वतीं जुहुयात् ॥ त्र्यहमहुते मनस्वतीं हुत्वा यच्चिद्धित इत्यादि वारुणीस्तिस्रो जुहुयात् ॥

षट्दिन महुते मनस्वती वारुणीश्च हुत्वा तिस्रस्तन्तुमतीर्जुहुयात् ॥• दशरात्रम-हुते मनस्वतीं वारुणीस्तन्तुमतोरभ्यावर्तिनीश्च जुहुयात् ॥ एकादशदिनेपि। अग्नौस्थिते एवमहुत प्रायश्चित्तम् ॥

अग्निनाशे सति प्रथममनुगत प्रायश्चित्तं कृत्वा पश्चान्मनस्वत्यादि-तत्तत्कालाहुत प्रायश्चित्ताहुतीर्जुहुयात् । सर्वत्र चतुर्गृहीतेन होमः ॥ अनुगत-प्रायश्चित्तमिति, अहुत प्रायश्चित्तं इति प्रत्येकं संकल्प्य तत्तत्कालाहुती जुहुयात् ॥ अग्न्यनुगत्यामयमाहुति स्या द्वादशाहाज्जुहुयात् ॥

**तथैव —**

एकाहं तु मनस्वत्या द्विरात्रं वारुणीत्रयम् ।
• त्र्यहं तन्तुमतीभिः स्यात् अभ्यावर्तिन्यृचश्चतुः ॥

अथ एवं केचिद्वदन्ति —

अर्वाक् त्रिरात्रादयसाहुतिःस्यादासप्तरात्रं तु मनस्वती च ।
आद्वादशाहादपि तन्तुमत्य ऊर्ध्वं यथावत्पुनरादधीत ॥
एतद्वचनं बोधायन व्यतिरिक्त विषयम् ॥

द्वादशाहं विच्छिन्नः पुनरोधेय इति ।

एकादश दिन अग्नावहुते नाशे वा प्रायश्चित्तम् ॥ द्वादशाहप्रभृति पुनराधानं कर्तव्यम् ॥

द्वादशाह प्रभृत्यग्नेर्नाशो यस्य भवेत्तदा ।
प्राजापत्यं चरेत्कृच्छ्रं होमद्रव्यं त्यजेद्बुधः ।
कृच्छ्रस्थाने हिरण्यादि दत्वा वाऽऽधेय उत्तमैः ॥

आधानकालः ——

पर्वप्रतिपदोः काले अग्न्याधानं विवर्जयेत् ।
कृत्तिका रोहिणी चित्रा फल्गुनी द्वे पुनर्वसू ॥

अग्न्याधाने शुभाः प्रोक्ताः देव नक्षत्रकेषु वा ।
विद्वान् कुर्यात्तदाऽऽधानं यदाऽऽधाने रमेन्मनः ॥

अग्नेः पुनराधानं करिष्ये । अग्न्यादयः प्रीयन्तामिति पुण्याहम् । ब्राह्मणं प्रणवेनोपवेश्य कूर्चं वाऽभ्यर्च्य वदेत्—ब्रह्मन्नग्निमाधास्ये ॥ आधत्स्वेति प्रतिवचनम् ॥ व्याहृतीभि. सिकताः संभृत्य यथोपपात माग्न्याधेयिकान् संभारान् संभृत्य या प्रकृतिः ततः प्रणवेनाग्निमाहृत्य व्याहृतीभिर्न्युप्य उपसमाधाय उपस्थानादि स्रुक् स्रुवसमार्जनान्तं कृत्वा अग्नि परिषिच्याभ्यर्च्य समिधमाधाय चतुर्गृहीतेन पूर्णाहुतिं जुहोति सप्तते अग्न इति ॥ अत्र वरं ददाति धेनुमृषभमनड्वाहं कंसं हिरण्यं वासो वेति । पुनश्चतुर्गृहीतेन त्रिस्रस्तन्तुमतीर्जुहोति तन्तुं तन्वन् उद्बुध्यस्वाग्ने त्रयस्त्रिशत्तन्तव इति ॥ पुनश्चतुर्गृहीतेन चतस्रोऽभ्यावर्तिनीर्जुहोति । अग्नेऽभ्यावर्तिन् अग्ने अङ्गिरः पुनरूर्जा सह रय्येति ॥ अथ प्रत्येकं चतुर्गृहीतेन मनोज्योति· प्रजापतेनत्वत् अन्वग्निरुषसां अयाश्चाग्ने उद्वयं तमसस्परि आयुर्दा अग्ने । पुनश्चतुर्गृहीतेन मिन्दाहुती द्वे यन्म आत्मनः पुनरग्निश्चक्षुरदात् । पुनश्चतुर्गृहीतेन व्याहृतीर्व्यस्ताः समस्ताश्च जुहोति ॥

अत्र कारिकाः ———

सप्ततिस्रस्तन्तुमत्योऽभ्यावर्तिन्यः चतुः तथा । [तीक्ष्णतस्रोभ्यावर्तिनीरपि]
मन· प्रजापतेऽन्वग्निः अयाश्चोद्वयमेव च ॥
आयुर्मिन्दाद्वि भूरादि चतुराहृत्य विंशतिः ॥
अग्नि परिषिच्य ब्रह्मणे वर दत्वा विसृज्य उपतिष्ठते ॥

अथास्तमित आदित्ये व्रीह्यादिना औपासनं कुर्यात् । तदैव कर्म कारिष्यन्यदि पूर्वेद्युः सायमौपासनं अद्य प्रातरौपासनं च तन्त्रेण होष्यामीति संकल्प्य कुर्यात् । एव होम. — अग्नये स्वाहा, अथ प्रातराहुतिः सूर्याय स्वाहा । प्रजापतये स्वाहा, तन्त्रहोमे स्विष्टकृत्स्थाने प्रजापत्यं सकृद्धुनेत् ।

यदि प्रथमं कुर्यात्तत्साय मौपासनहोमं होष्यामिइति संकल्प्याहुति 'द्वयं हुत्वा, ततः प्रातरौपासन होमं होष्यामीति संकल्प्य प्रातराहुतिद्वयं इति तन्त्रहोमे एवं कुर्यात् । शेषं समानम् ॥ अयमेव पक्षः प्रथमः । तन्त्रहोमस्तु द्वितीयः ॥

अत्र वचनानि— पुनराधानमारभ्य जुहुयात्सायमादितः ।
ततः पुनस्तु संधाने तत्कालोक्ताहुती हुनेत् ॥

अहुते त्वेककालं तु प्रायश्चित्तं मनस्वती ।
हुत्वा कालद्वयस्यापि होम कुर्यात् पृथक् पृथक् ॥

सायं प्रातस्तु तन्त्रेण यदि होमौ समाचरेत् ।
उभयोः स्विष्टकृत्स्थाने प्राजापत्यं सकृद्धुनेत् ॥

अत्र विशेषः— उपघातेऽपहारे वा स्पृष्टे शूद्रार्तवादिभिः । समारूढ समिन्नाशे पुनराधानमिष्यते ॥ एवमग्नौ दुष्टे सति पुनराधानं कर्तव्यम् ॥ श्रुतिः- "यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत्पुनराधेयः स्यादिति" ॥

केचिदेवमाहुः —

अग्न्यारूढ समिन्नाशे प्रायश्चित्तं कथं भवेत् ।
अयाश्चेत्येव मन्त्रेण चतुर्ग्राहाहुतिं हुनेत् ॥

इति तदयुक्तं । श्रुतिरेव बलीयसी ॥
अतः पुनराधानं कर्तव्यमेव ॥
अथ षण्मासादूर्ध्वं औपासनाग्नि विच्छेद प्रायश्चित्तम् ॥

सायं प्रातर्हुत द्रव्यं हविराज्यं च पर्वणोः ।
नष्टकालक्रिया द्रव्यं दत्वाकृच्छ्रं च पूर्ववत् ॥

दीर्घकालाग्नि नष्टेन[तु]धान्यं कृच्छ्रं च होमकम् ।
तीर्थस्नानं जपं कृत्वा पश्चादाधानमारभेत् ॥

## अथ प्रयोगः

प्रथमं पूर्ववदग्न्याधानं कृत्वा अग्न्यादयः प्रीयन्तामिति पुण्याहं कृत्व तदानीमेव सपरिस्तीर्य चतुश्शरावमोदनं श्रपयित्वा आग्निमुखात्कृत्वा मेक्षणेनोपघातं पक्वाज्जुहोति-अग्नये स्वाहा, सोमाय स्वाहा, अग्नयेऽन्नवते स्वाहा, अग्नयेऽन्नादायस्वाहा, अग्नयेऽन्नपतये स्वाहा, अग्नयेपवमानाय स्वाहा, अग्नये पावकायस्वाहा, अग्नये शुचये स्वाहा, अग्नये ज्योतिष्मते स्वाहा। अग्नये व्रतपतये स्वाहा। अग्नये पथिकृते स्वाहा। अग्नये तन्तुमते स्वाहा। अग्नये वैश्वानराय स्वाहा। सूर्यायस्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहा, भूः स्वाहा। भुवः स्वाहा, सुवः स्वाहा, ओ भूर्भुवस्सुवः स्वाहा। इति विंशत्याहुतीर्हुत्वा व्याहृतीभिराज्याहुतीर्हुत्वा अग्नये स्विष्टकृते स्वाहा इति स्विष्टकृतं हुत्वा मेक्षण प्रहृत्य जयादिपरिषेचनान्त कुर्यात् ॥

अथास्मित आदित्ये औपासनहोमः। अग्निमाधाय अग्न्याधानवत् सायं औपासनानंतर भोजयेत् ॥

आहुति द्वयसपर्कप्रायश्चित्तं--यत्पूर्वस्या आहुत्या॰हुतायामुत्तराहुतिः स्कन्देत्। द्विपाद्भिः पशुभिर्यजमानो व्यृद्ध्येत। यदुत्तरयाऽभि जुहुयात्। चतुष्पाद्भिः पशुभिर्यजमानो व्यृद्ध्येत ॥

अथ वनस्पति होमः --

यत्र वेत्थ वनस्पते देवाना गुह्या नामानि। तत्र हव्यानि गामय स्वाहा इति ॥ वानस्पत्ययर्चा समिधमाधाय तूष्णीमेव पुनर्जुहुयात् ॥ समिधं वा ॥

## उपरागप्रायश्चित्तम् ॥

सोमोपरागे नवोनवो भवति जायमानो यमादित्या इति द्वे आहुती एक चतुर्गृहीतेनजुहुयात् [127पृष्ठे] नव नवो +दीर्घमायुः स्वाहा। चन्द्रमस इदम् ॥

यमादित्याः+गोपाः स्वाहा । चन्द्रमस इदम् ॥ सूर्योपरागे- एकचतुर्गृहीतेन विग्राहं जुहोति— उद्वयं तमस (14पृष्ठे)उदु त्य जातवेदसम्, चित्रं देवानामिति (128-129) यद्युखा भिद्येत तामभिमन्त्रयते—अभिन्नो धर्मो जीरदानुर्यत आत्त स्तदगन्पुनः । इति ॥ अथाज्य विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सन्तनी जुहोति—इध्मो वेदि परिधयश्च सर्वे यज्ञस्याऽऽयुरनु सञ्चरन्ति । त्रयस्त्रि॑शत्+दधामि स्वाहा ॥ (274) इति । अथान्यामाहरति — धर्मो देवा॑ अप्येतु इति ॥

## विधुराग्नि सन्धानविधिः ॥

लौकिकानि प्रणवेनाहृत्य, अन्वग्निरुषसामिति हरेत् । पृष्टो दिवीति निधाय पृष्टो दिवि पृष्टो अग्निः पृथिव्या पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥चतुर्भिः शकलैर्हुनेत् - तत्सवितु ता॑ सवितुर्वरेण्यस्य, विश्वानि देव सवितः, अद्यानो देव सवितः इति ॥ ततो यथाकालमौपासनं हुत्वा विसृजेत् । एव काले काले कुर्यात् । विधुरस्याहिताग्नेश्चह्युपाकर्मणि संभवे । हुनेच्चतुर्गृहीतेन प्रतिसन्धान मन्त्रतः ॥

पुनस्त्वा रुद्रकर्मान्ते लौकिकः सपद्यते । विधुरस्याशेषाधान यज्वनश्च स्मार्तकर्मकरण एवं सन्धाय कुर्यात् ॥ विवाहे वितते तन्त्रे होमकाले उपस्थिते। कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ यजुः पवित्रै रब्लिङ्गैः सावित्र्या पूतवारिभिः । अनेन चानुवाकेन पवमानः सुवादिना ॥ स्नापयित्वा तु विद्वाद्भि रन्य वस्त्राद्यलं कृताम् । पूर्णाहुत्याथ मिन्दाम्या महाव्याहृति-भिस्सह ॥ हुत्वा तन्तुमतीश्चैव व्याहृतीश्च ततः परम् ॥ अनुज्ञाप्य तु (अनाज्ञातं च) विद्वद्भि शेषं कार्यं समाचरेत् ॥ प्रधानहोमे निर्वृत्ते मलवद्वाससी भवेत् । त्र्यहे तु पर्यवेते तु शेषकार्यं समाचरेत् ॥

## ॥ नाना प्रायश्चित्तम् ॥

आदित उपलिप्तस्थले श्वा वेटको(वेटा) वा यदि गच्छेत्कीटोवा पिण्ड-कारी स्यात् ॥ पुनरुपलिप्य प्रोक्षति–देवस्य त्वा सवितुः + हस्ताभ्यामग्ने-स्तेजसा प्रोक्षामि इति प्रोक्ष्य स्थण्डिल मुपलिप्य उद्धरेत् ॥

स्थण्डिलमुद्धृत गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत्तस्य पदमभ्युक्ष्य (पूर्ववत्प्रोक्ष्य) जपति–पृथिवि देवयजन्यो-षध्यास्ते मूलं मा हि॒ᳪसिषम् इति ॥ अथ कृतान्तेन प्रतिपद्यते ॥ कर्मान्ते जुहुयात् ॥

यदि प्रणीतापात्रं भिद्येत तदभिमन्त्रयते — अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुन. इति ॥ अथान्य दाहरति – धर्मो देवाᳪ अप्येतु, इति तूष्णीम् पूरयित्वा व्याहृतीभिरुपतिष्ठते ॥

प्रणीताजल सिच्येत् [स्रवेत्] प्रणीयमाना वा सिच्येत् तामभिमन्त्रयते- अक्षितोऽस्याक्षत्यै त्वा मा मे क्षेष्ठा अमुत्राऽमुष्मिन् लोके इति ॥ पूरयित्वोप तिष्ठते –भूरायुर्मे धारयत प्राण मे धारयत प्रजा मे धारयत पशून् मे धारयत मा म आयुः प्राणाः प्रजाः पशव. परासिच्येरन् इति ॥

## ॥ अथ·कन्या कर्मकाले उपसाद्यमाना वोह्यमाना वा ॥

पतेत् यदि तामुत्थापयेत्—उदस्याद्दे व्यदितिर्विश्वरूपि ॥ आयुर्यज्ञ-पतावधात् । इन्द्राय कृण्वती भागम् । मित्राय वरुणायच ॥ अथ रजस्वला स्यात्तामनुमन्त्रयते — पुमासौ मित्रावरुणौ पुमासावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमा‌ꣳ वर्धयतामिति ॥ यद्यश्रु कुर्यात्तामनुमन्त्रयते— जीवाᳪ + परिष्वजे इति ॥

अथ दर्वी कूर्च प्रस्तर परिधि बर्हिः पवित्र वस्त्रेध्म द्रव्य सम्भाराणां चेद्दाहोपघातेषु नाशे विनाशे वा अन्यं यथालिङ्गं कृत्वाऽऽसाद्य जुहोति— त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते इति स्रवाहुतीः ॥

परिस्तरणदाहे-अग्नये क्षामवते स्वाहा इति हुत्वा दग्धं त्यक्त्वाऽन्य-त्परिस्तृणाति इन्द्रं वो विश्वतस्परि-इन्द्रं नर इति द्वाभ्यां ॥ अथ जुहोतीन्द्राय स्वाहेति ॥

अथ परिधिदाहे--परि त्वाग्ने पुरं वयमिति हुत्वा दग्धं त्यक्त्वाऽन्यत् सादयति ॥

मन्त्रवस्त्रादि कर्माङ्गदाहे अन्यमुपमाद्य जुहोतिसोमाय स्वाहेति ॥ सिचाभिघातःस्यात् [आदावन्ते वा] तमभिमन्त्रयते — सिगसि नसि वज्रोऽसि नमस्ते अस्तु मा मा हि॒ँसीः इति स्यूतदशविधाय [दशासूत्रमादाय] मुखवातेन प्रध्वसयेत् ॥

अथ रौद्राशाश्रवणे—त्वमग्ने रुद्र आ वो राजानमिति जपेज्जुहोति वा ॥

अथ दुःशकुने जपेत् - द्विपच्चतुष्पदस्माक॒ँ सर्वमस्त्वनातुरम् ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु श॒ँससि। स्वस्ति नः शकुने अस्तु प्रति नः सुमना भव ॥ इति ॥

क्षुधादिर्वाच श्रवणं श्रुत्वा जपति—अनुहवं परिहवं परीवादं परि-क्षपम्। दुःस्वप्नं दुरुदितं तद्विषद्भ्यो दिशाम्यहम् ॥ अनुहूतं परिहूत॒ँ शकुनेयदशाकुनम्। मृगस्य सृतमक्षणया तद्विषद्भ्यो दिशाम्यहम् ॥

विद्युत्स्तनितमन्द्रासे— यत इन्द्रद्वय जपेत् ॥ भयेषु जातवेदस इति निरन्तर जपेत् ॥

अथ द्रव्य हविर्मन्त्रकर्मादीनामतिपन्न स्कन्नभिन्न भग्न नष्ट दुष्ट विपरीत दग्धाश्रुत्य निकृतानां - मनो ज्योतिः अयाश्चाग्ने यदस्मिन्कर्मणि स्वस्ति न इन्द्रो वृद्धश्रवाः व्याहृतीश्च जुहुयात ॥

अथ व्याहृतीना होमे अयथाकृतं कर्म यथावत् भवतीति सर्व-प्रायश्चित्तानि प्रधानादौ.प्रधानादौ स्विष्टकृतः पुरस्ताज्जुहुयात ॥

अथ विपरीत दर्भास्तरण प्रोक्षणीसंस्कार ब्रह्म प्रणीता हविर्निर्वापणाज्य संस्कार स्रुक्स्रुवसम्मार्जन परिषेचनेध्माऽऽग्नादि विपरीतेषु प्रायश्चित्तं — तत म आपः यत्पाकत्रा मनस्वती मिन्दाहुती महाव्याहृतीर्व्याहृतयश्च जुहुयात् ॥

श्व काक मृग पक्षि सरीसृपाणामन्यतमः कीटो वा ऋत्विजोऽग्निम (ग्नीन)न्तरा गच्छेत्-दुर्गा मनस्वती महाव्याहृतीस्तिस्रस्तन्तुमतीर्जुहुयात् ॥

सर्वत्र स्कन्ने भिन्ने छिन्ने क्षामे विपर्यासे उद्दाहे न्यूनातिरिक्ते हस्त-पवित्रनाशे पात्रभेदे द्वे मिन्दाहुती जुहोति ॥ आज्ये मक्षिका मशक रोमसम्बन्धे प्राजापत्य जुहुयात् ॥

अनाम्नातेषु यज्ञसमृद्धीर्जुहोति + इष्टेभ्यः स्वाहेति नव ॥ अनाम्नाते ऽन्तरागमने दशहोतारं चानुख्या च ॥ अन्वग्निः अनुख्या ॥ अनाम्नातेऽग्नौ वर्तमानप्रायश्चित्तम् - चतुर्होतारमनुख्यां च जुहोति ॥ (अत्र सूत्रे अन्तर्हते प्रायश्चित्तमित्येव भवति)

मण्डुकसर्प मूषिक मार्जारान्तरागमने - पञ्चहोतार मनुख्या च ॥

विकृतरूपे विकृतशब्दे विस्फुटिते प्रायश्चित्तम - शंयुवाकमनुख्या च जुहोति ॥

प्रजासंस्कारार्थाग्नावुत्पन्ने तद्भस्म समारोप्य लौकिके निदध्यात् । समिद्धा यदि न विद्यते महाव्याहृतीः प्रणवं मनस्वतीं च जुहोति ॥

स्वराक्षरपदवृत्तभ्रेषेषु आभिर्गीर्भिरिति जुहोति ॥

औपासने दीपादि लौकिकं व्यवहरेद्यदि मनस्वतीं जुहुयात् ॥

अथ कर्ममध्ये अग्नेरुद्वासने सर्वं तत् अपहता इति प्रोक्ष्य स्थण्डिल मुद्धृत्य श्रोत्रियगृहादग्नि मुपसमाधाय संपरिस्तीर्य प्रायश्चित्तं कुर्यात् ॥अयाश्च पञ्चहोता ब्राह्मणएकहोता[दश] मनस्वती मिन्दाहुती, महाव्याहृती[व्याहृती]श्च जुहोति ॥

[मन्त्र] अधिक कर्माणि अकृतसीमन्तायां प्रसूतायां भार्यायां स्त्रीषु गोषु यमळजनने रजस्वलाभिगमने पतितसम्भाषणे दिवामैथुने शूद्राभिगमने स्वप्नान्ते रेतःस्खलने उदके मूत्रपुरीषकरणे कुमारस्य जातस्यासंस्कारे अकृताग्निसंसर्गे देवताविपर्यासे मन्त्रकर्मविपर्यासे पाहि नो अग्न इति पञ्च जुहुयात् ॥

ऋतुप्रवेशने विच्छिन्ने यावदृतुकालं विच्छिन्नं तावन्मत्वा दिवा उपोष्य ब्राह्मणाननुज्ञाप्य प्रदोषेऽग्निमुखान्तं कृत्वा यस्त्वा हृदा यस्मै त्वमिति पक्वहोमः । मधुश्च स्वाहा माधवश्च स्वाहेत्यादि विच्छिन्नकालोक्तहोमः ॥ द्वादशाहादिषु अपरेणाग्निं उभा जायापती आज्यशेषं पक्वशेषं चप्राश्नीयाताम् ॥

## अथ कूश्माण्ड होमः

प्रायश्चित्तार्थं पर्वणि वापयित्वा सविता प्रीयतामिति पुण्याहम् ॥ अग्निमुखान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदाय निधाय जुहोति यद्देवा देवहेळनमित्यादिभिरनुवाकैः सि॒ꣳहे व्याघ्र इत्यादि चतसृभिः अग्नेऽभ्यावर्तिन्निति चतसृभिर्हुत्वा समित्पाणिर्यजमानः स्वस्थाने तिष्ठन् वैश्वानराय प्रति वेदयाय इत्युपस्थाय उपविश्य यन्मे मनसा वाचा इति समिधमाधाय वरन्दत्वा स्विष्टकृदादि समानम् ॥ एवं त्रिरात्र हविष्याशी प्रतिदिनं कुर्यात ॥ आपूर्विकविधानेन मेक्षणेनोपघातं घृतमिश्रोदनं जुहुयात् । अग्ने नय सुपथा राय इति षट् । सहस्रशीर्षा पुरुष इत्यनुवाकमष्टादश । अग्नेर्मन्व इत्यनुवाकं द्वाविंशतिः या वा मिन्द्रावरुणाविति द्वादश । पवमानः सुवर्जनः इति सप्तदश । यद्देवा देवहेळनमिति विंशतिः । वैश्वानरो न ऊत्य प्रयातु इत्यष्टौ । व्याहृतीराज्याहुतीः अग्नये स्विष्टकृतेस्वाहेति स्विष्टकृतं हुत्वा परिषेकादि चतुष्पात्रक्रियादि कुर्यात् ॥

क्ष्मापवित्रं नमस्साक्षो मृगराꣳहोमुचोगणाः । पवमानश्चकूश्माण्डीवैश्वानर ऋचश्च याः ॥ घृतोदनैस्ताञ्जुहुयात्सप्राहं सवनत्रयम् । औपासनानलो यस्य संसृजेल्लौकिकादिना ॥ अग्नये विविचये स्वाहा प्रायश्चित्तं श्रुतौस्थितम् । भोजयेदुपस्थे त्वमग्ने व्रतभृ शुचि ॥ व्रतानुबिभ्रन्मन्त्राभ्यां हुनेत् पुरोनु याज्यया ।

श्रुत्वा मृत शब्द जीव चतुर्मासादधुनेदिति ॥ अग्निहोता पुगेन[न्त्र]स्य मूनया याज्यया तथा ॥ सर्वत्र पाकयज्ञानां सदस्येभ्यो धेले मृषभमनड्वाहं दद्यात्। सदस्याः प्रायश्चित्तानि प्रतिनिधि च बोधयन्ति। प्रायश्चित्तान्यशेषा +परम् ॥

पुत्रगुरुज्येष्ठ व्यतिरिक्तोच्छिष्टभक्षणे भ्रिया सह भोजने सुरा मांस श्राद्ध सूतकान्न गणान्न गणिकान्न भक्षणे अनिर्दशाहं(ह)वत्सहीन सन्धिनी-क्षीर छत्राक पाकनिष्ठिद्ध निर्यास भक्षणे च सौराष्ट्र सिन्धु सौवीरावन्ति दक्षिणापथ इत्यादि निषिद्धदेश गमने च एवमन्यस्मिन् स्मृत्युक निषिद्धकर्मणि च पुनरुपनयनं कर्तव्यम् ॥ अज्ञानेन कृतं पापं प्रायश्चित्तेन शुद्धयति। दोषादोषे च विज्ञाते कुर्यात्तस्य विशुद्धयति ॥ तदुक्तम् — कृच्छ्रप्रत्याम्नायत्वेन हिरण्य धान्य गोदान स्नान जप होमादि कृत्वा आचार्यमुखेन अग्निःसप्तवान् प्रीयतामिति पुण्याहम् ॥ अग्निमुखान्ते पालाशीं समिधमाज्येनाक्ताभ्या धापयन्वाचयति — पुनस्त्वादित्या इत्यादि ततो द्वे भिन्दाहुती हुत्वा पक्व ज्जुहुति सप्तते अग्न इन्यृचा द्विरावृत्तिः। अथाज्याहुतीर्जुहोति येन देवा-पवित्रेणेति तिसृभिः। स्विष्टकृदादि समानम् ॥ आपूर्विक विधिना वा कुर्यात् ॥ अजिनं मेखलां दण्डं भैक्षाचर्यं व्रतानि च। वपनं दक्षिणादानं सहैतानि निवर्तयेत् ॥

उपवीतादि लोपेषु लुप्तं तत्तत्काले सन्धाय कर्तव्यम्। सन्ध्यादि लोपे पूर्ववत्कृत्वा पश्चात् अग्निमुखान्ते सावित्र्या पक्वं हुत्वा उपहोमः—कामेन कृतं कामः करोति काम एवेदं सर्वं यो मा कारयति तस्मै स्वाहा। रजसा कृतं मनसा कृतं मनः करोति मन एवेदं सर्वं यन्मा कारयति तस्मै स्वाहा। रजसा-कृतं+तस्मै स्वाहा। नमसा कृतं+तस्मै स्वाहा। पाप्मना कृतं+तस्मै स्वाहा। मन्युना कृतं+तस्मै स्वाहा ॥ स्विष्टकृदादि समानम् ॥ अपरेणाग्निं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन्रात्रौ वसति प्रातस्तीर्थं गत्वाऽघमर्षणेन सूक्तेन स्नात्वा षोडश प्राणायामान् धारयित्वा सन्ध्यामुपास्य आवृत्य मन्त्रं

यदि ब्राह्मणाननुज्ञाप्य सावित्र्या शतकृत्वोऽभिमन्त्र्य घृतं प्राशयेत् गुरोरुच्छिष्टं जडबधिर मूक क्लिब पाषण्डोन्मत्त हीनाङ्गः व्यसनि कुष्ठ व्याध्यधि काङ्गापस्मार कुब्ज दीर्घरोगिणाञ्च अशक्तविषये उपनयनविधिरुच्यते — नान्दीमुखं प्रतिसरं अङ्कुरं च कृत्वा सविता प्रीयतामिति पुण्याहम्। चौळवत् तूष्णीं केशानोप्य स्नात शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुच्य मन्त्रोच्चारणशक्तश्चेत् वाचयेत् ॥ आचार्य एवाग्निमुखान्ते याज्ञिकवृक्षसमिध माज्येनाऽक्तत्र तूष्णीमाधाप्य तूष्णीमश्मानमश्थाप्य तूर्णीं वासः परिधाप्य तूष्णीं मेखलां परिवीयमन्त्रवत् ग्रन्थि कृत्वा तूष्णीमजिनं प्रतिमुच्य तूष्णीं दण्डं प्रदाय मन्त्रेण परिददाति नामग्रहणवर्जम्। आचार्य एव पक्वाज्जुहोति अनाम्नातत्वादृग्यत्र्या। क्षेत्रियैत्वेति षड्भिर्व्याहृतीमिश्र उपहोमाः। स्विष्टकृदादि। याज्ञिकवृक्षपर्णेषु हुतशेषं निदधाति। तूष्णीं पक्वं प्राश्नाति॥ द्वितीयेऽह्नि तूष्णीं मधुपर्कं दद्यात्॥ उपनयनाग्निं पिता भ्राता वाऽऽत्मन्वा समारोपयेत्। शिशुरेव वा। आयुर्दा अग्न इत्यृचा उत्सृजेद्वा॥ अत्र मन्त्रोच्चारणे अधिकारिणं सर्वान्मन्त्रानुच्चारयेत्। सर्वान्वा उच्चरेत्॥ उपनयनोक्त मन्त्राः सर्वे नोक्ताः। उपदेशग्रहणशक्तस्य उपदेशं कुर्यात्। अशक्तविषये तूष्णीमेव कुर्यात्॥

अश्वत्थोपनयनं वक्ष्ये नान्दीमुखंप्रतिसरंच कृत्वा आचार्यः - सविता प्रीयतामिति पुण्याहं कृत्वा — प्रदक्षिणमग्निं परिसमूहति अश्वत्थे वो निषदनमित्यृचा। अश्वत्थमलंकृत्या तूष्णीं यज्ञोपवीतं प्रतिमुच्याग्निमुखात् कृत्वा याज्ञिकवृक्षसमिधमाज्येनोक्त्वा तूष्णीमभ्याधाय तूर्णीं वासः परिधाय तूष्णीं मेखलां परिवीय मन्त्रेण ग्रन्थि कृत्वा तूष्णीमाजिनं प्रतिमुच्य तूष्णीं याज्ञिकदण्ड प्रदाययस्मिन् भूतं चेत्यदि नामग्रहणवर्जम्। अनाम्नातया पक्वहोमः। क्षत्रियै त्वेति षड्भिर्व्याहृतीभिश्चोपहोमाः। स्विष्टकृदादि। मन्त्रेण पलाशपर्णेषु हुतशेषं निदधाति। पक्वादुद्धाय तूष्णीमश्वत्थाय निवेदयेत्। सर्वान्मन्त्रान् कर्ता जपेत्। त्रिरात्रं व्रत न भवति।

आचार्याय गामश्वत्थवान्त्रं च दद्यात्। महाब्दादि यथाकाले कारयेदुपनायनम्। ब्रह्मादिरूपाश्वत्थस्य स याति परमा गतिम् ॥

विवाहे कृते यस्य वृद्धिर्गभ मवत्सरात्पूर्वं जायते, यस्य च विवाहानन्तर औपासनारम्भात्पूर्वं विवाहाग्नावनुगते तस्य च पुनर्विवाहः कर्तव्यः। तां पत्नीमेव विवाहोक्तकाले नान्दीमुख प्रतिमर च कृत्वा यक्षिवन्त्यादि डोळाकृत्यादि इषु प्रतोद धारणादिवर्जम्। अभ्रातृनीमित्यादि सप्तपदान्तं कृत्वाऽथ देवयजनोल्लेखानादि समानं ॥ दशमेऽहन्यान्तं समानम् ॥

प्रसङ्गाद्द्वितीयविवाहे हेतुमाह - अप्रजा दशमे वर्षे स्त्रीप्रजा दशमे त्यजेत्। मृतप्रजां पञ्चदशे सद्यस्त्व प्रियवादिनीम ॥ परानुकूलां परकृत्यभाषिणीं विवादशीला स्वयमर्थचोरिणी। अप्राशनीमन्यगृह प्रवेशिनी भार्यां त्यजेत्पुत्रदश प्रसूतिकाम् ॥ उद्वहेत्प्रवरे तुल्ये मगोत्रे वा मतिभ्रमात्। ततोन्यामुद्वहे कन्या धर्मसन्तानसिद्धये ॥ मानवैः स्वलके स्थिति सर्वोपशवे विधुः। त्रायते पुत्रा नरकात् पुत्र इत्यभिधीयते ऋणमस्मिन् सं न यति अमृतत्वं गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ तन्तु तन्वानस्तनयः पितॄणामनृणो भवेत् ॥ एवमादिवचनैः पुत्रवान्भविष्यामीति द्वे जाये विन्दते तस्मादेको द्वितीयविवाहं कुर्यात ॥ तस्मादेको बह्वीर्जाया विन्दते इति श्रुतिः ॥ तस्मान्नैका द्वौ पती विन्दते इति विशेषः। तस्मात् पुनरुद्वहेत्। द्वितीयविवाहे तु तेएकादशेऽह्न द्वादशेऽह्न वा द्वितीय विवाहाग्निमुपसमाधाय संपरिस्तीर्य संमार्ज नान्तंकृत्वाऽग्नि परिषिच्याभ्यर्च्य समिधमाधाय स्रुचि चतुर्गृहीतं गृहीत्वा द्वितीयायामन्वारब्धायां जुहोति - नमस्त ऋषेगद +दस्तु स्वाहा। पुनश्चतुर्गृहीतेन व्याहृतीर्हुत्वा तमग्निं समित्सि समारोप्य अयन्त इति ॥

प्रथमायाः औपासनं उज्ज्वलयित्वा प्रक्षिपति—आजुह्वानः उद्बुध्यस्वेति। आज्य संस्कृत्य जायाभ्यामन्वारब्धश्चतुर्गृहीतैर्जुहुयात् — यो ब्रह्मा ब्रह्मण

इत्यष्टाभि. प्रत्यृचम् । व्याहृतीभिश्चतसृभिः ॥ अग्निः प्रीयतामिति पुण्याहम् ॥ जायाभ्यामन्वारब्धः कुर्यात् अग्निमुखान्ते समित संकल्पेनामिति पुरोऽनुवाक्यामनूच्याग्ने पुरीष्येति याज्या जुहोति । अथ उपहोमः -- पुरीष्यस्त्वमग्न इत्यान्तादनुवाकस्य अष्टादशभिर्हुत्वा । स्विष्टकृदादि । दर्भस्तम्बेषु हुतशेषं निदधाति—ब्रह्मजज्ञानं पिता विराजामिति द्वाभ्याम् । शेषं समानम् ॥

प्राक्संयोगात् द्वयोर्भेदेन परिचरणम् । बहुजाया मवाप्य एवं जुहुयात् ॥ सीमन्त पुंसवनादीनि संसृष्टाग्नौ चरेद्बुधः । अग्नेर्विभागं कुर्याच्चेत् अन्योन्य कलहादीनाम् हुनेच्चतुर्गृहीतेन इप स्तनमृचस्ततः । न कुर्यादग्निसंयोगं आचरेत्तु पृथक्पृथक् ॥ अयं पक्षो निषिद्धः स्यात् संयोगाग्नि समाचरेत् ॥

## अथ अर्कविवाहः ॥

मूकान्धबधिरादीनां तृतीयविवाहिनां च कथ्यते । तृतीयो द्वाहपत्नी या ना मा ध्रुवमितीरिता । तस्मादर्कविवाहं वा रम्भेद्वाहं करोतु वा ॥ शोभनकाले ग्रामात्प्रामुचीदीचीं वा दिशं गत्वा समस्थले एकमूलबालार्कस्थले उपलिप्य स्नात्वाऽर्कं च स्नापयित्वा नववस्त्रेणाच्छाद्य पादप्रक्षालनादि कृत्वा स्वस्तिसूक्तं जपित्वा हिरण्यं रविसन्निधौ संस्थाप्य गोमिथुनस्थाने आसत्येनेति जपित्वा हिरण्यं ब्राह्मणेभ्यो दत्वा संकल्पःतृतीयविवाहार्थं इत्यादि सूचयित्वा आदित्यः प्रीयतामित पुण्याहं कृत्वा स्रक्चन्दनादियुक्तं अर्कं स्पृष्ट्वा सूर्यं दृष्ट्वा सूर्यो देवीमिति पञ्चर्चं जपित्वा वस्त्र माङ्गल्यसूत्रं धारयित्वा आपूर्विकविधिना स्रुक्संमार्जनान्तं कृत्वा आदित्यं ध्यात्वाऽर्कं गृह्णाति-हस्तः प्रयच्छत्वमृत+प्रसुवाति यज्ञम् ॥ परित्वाऽग्ने पुरं वयमिति अग्निं प्रदक्षिणं कुर्यात् ॥ अर्कं स्पृष्ट्वादित्यमुपतिष्ठते — अभीवृतं कृशनैः+दधान इति । स्रुवेण व्याहृतीभिर्हुत्वा चतुर्गृहीतेन उद्वयं उदुत्यं चित्रमिति तिसृभि विग्राहं जुहोति पुनश्चतुर्गृहीतेन लाजमन्त्रेण द्विरावृत्या जुहोति । स्रुवेण व्याहृतीभिर्हुत्वा

कर्मशेषं समाप्य आदित्याभिमुखस्तिष्ठन् व्रतश्चाभ्यामुपतिष्ठते अदाभ्यो भुवनानि प्रजा व्रतानि देवः सविताभिरक्षतु प्राक् प्राक् भुवनस्य प्रजाभ्यो धृतव्रतो महो अजस्य राजस्य ॥. त्रिरन्तरिक्षं सविता महित्वाना त्रिराजसि परिभूस्त्रीणि रोचना । तिस्रो दिवः पृथिवीस्तिस्र इन्वती । त्रिभिर्व्रतै रभिरक्षतु त्मना ॥ अथ अर्कं स्पृष्ट्वा गोक्षीरं धृतसूक्तेन प्राशयेत् । आचम्य अचित्ति यच्चकृमा + अनागसः ॥ इत्यादित्य मुपतिष्ठते ॥ अथ अर्कादिदेवतामुद्वास्य अर्कमुत्पाट्य दर्भैस्त्रिभिर्व्याहृतीभिः स्नात्वा विप्रेभ्यो यत्किञ्चिद्दक्षिणां दत्वा सद्य. शुद्धमवाप्नुयात् ॥ यद्वा अर्कमुत्पाटय स्नात्वा यत्किंचिद्दद्यात् ॥

एवं कदळीविवाहं कुर्यात् ॥ उद्वहे कदळीं कन्यां नदा संहृत्य चाप्लुतः । प्रदाय किञ्चिद्विप्रेभ्यस्त्रिरात्रमशुचिर्भवेत् ॥

इत्थं कनक सभापतिपूर्वप्रयोगादर्शग्रन्थः समाप्तः ॥

इति शुभम् ॥ श्रीकृष्णार्पणमस्तु ॥